

# Sri_Matanga Parameswara Agama.

## Vidyapada.











॥ श्री ॥




शिवाभ्यां नमः ।

# श्री मतङ्गपा मेश्वरागमविद्यापादः

## मूलम् ।

---

कृष्णतटाकाभिजनानां शास्त्ररत्नाकरादिबिरुदाङ्कितानां

श्रीकृष्णशास्त्रिणामन्तेवासिना

शिवागमसङ्घविदुषा

ना. कृष्णशास्त्रिणा

यथामति परिशोधितः

देवसालपुरी शिवागमसिद्धान्तपरिपालनसङ्घाध्यक्षैः

अनन्तशयनस्थ

श्रीभास्करमुद्रालये मुद्रितः ।

१९२४.

---



# ஸ்ரீ மதங்க பாரமேசுவர ஆகமம்

# ஞானபாத மூலம்.

---

இஃது

சிவாகம சித்தாந்த பரிபாலன சங்கத்து

வித்துவான்

ஸ்ரீமத் நா, கிருஷ்ணசாஸ்திரிகளால்

பரிசோதிக்கப்பெற்று

தேவகோட்டை

சிவாகம சித்தாந்த பரிபாலன சங்கத்தாரால்

திருவனந்தபுரம்

"பாஸ்கர" பிரஸில் அச்சிடப்பெற்றது.

1924.

—

॥ श्रीः ॥

# मतङ्गपारमेश्वरम् ।

## विज्ञप्तिः ।

—

भोः शिवभक्ताग्रेसराः पण्डितप्रकाण्डाः! विदितमेवेदं भवतां यत्किल भगवान् करुणानिधिः परमेश्वरः स्वभक्तजनानुजिघृक्षया सृष्टिस्थितिसंहारतिरोभावानुग्रहाख्यपञ्चविधकृत्यकारी सन् शैवरौद्र-भेदेन दशाष्टादशधा भिन्नान् ऊर्ध्ववक्त्रोद्भवत्वेन स्वतः प्रमाणभूतान् वेदवन्निरर्गळप्रामाण्यवतो विद्याक्रियायोगचर्याख्यपादचतुष्टयमिळितान् कामिकाद्यानष्टाविंशत्यागमान् उपागमांश्चासंख्यातान् प्रणवादिभ्यो महर्षिभ्योह्युपादिक्षादिति ।

तेषु चान्यतमोऽयं पारमेश्वरागमः पूर्वं परमेश्वरेण कोटिसंख्ययोपदिष्टः । अनन्तरं चानन्तेश्वरेण लक्षसंख्यया भाषितश्च ततः श्रीकण्ठनाथेन मतङ्गाय महर्षये पञ्चशताधिकत्रिसहस्रग्रन्थसंख्ययोपदिष्टश्च प्रविराजते । तत्र चायमाद्यो विद्यापादः सार्धसहस्रश्लोकपरिमण्डितस्सम्मुद्य प्रकाशितः । प्रकाशयिष्यन्ते चाचिरादेव शिष्टाः पादाः । अस्य च विद्यापादस्य सूत्रवद्दुर्विज्ञेयाभिप्रायस्य परशिवदयापात्रभूतैः श्रीभट्टनारायणकण्ठात्मजभट्टरामकण्ठाचार्यैः विरचिता वृत्तिरपि काचन मुद्रयिष्येत ।

अस्य च संशोधनाय मातृकादातारः । कीवळूर् श्रीलश्री, कल्याणशिवाचार्याः । श्रीमान् मुत्तुकुमारतम्पिरान् वर्याः ।

तिरुवाळूर् (कमलालयं) सुब्रह्मण्यशिवाचार्याः । मातृकाबाहुल्याभावाद्यथामति परिशोधितः । तस्माद्गुणग्राहिभिः पण्डितवर्यैः दोषाः परिहरणीया इति सादरमभ्यर्थयामहे ।

इत्थं

शिवागमसङ्घाध्यक्षाः

சிவமயம்.

சிவபக்தர்களுள் முதன்மையான பண்டிதசிரேஷ்டர்களே! கருணைக்கடலான சாக்ஷாத் பரமேசுவரன் ஆன்மாக்களுக்கு அநுக்கிரகஞ் செய்தற்பொருட்டுப் படைத்தல், காத்தல், அழித்தல், மறைத்தல், அருளல் என்னும் ஐவகைத் தொழிலைச் செய்கின்றார். இங்ஙனஞ் செய்யுமுறையில் பரமசிவனது மேல் முகத்திலிருந்து சைவம் 10, ரௌத்திரம் 18, என்னும் 28 ஆகமங்கள் தோன்றின. இவை வேதம்போலத் தடையற்ற பிராமாணியத்துடன் கூடினவையாய் ஞானபாதம், யோகபாதம், கிரியாபாதம், ச்ரியாபாதம் என்னும் நான்கு பாதங்களாய் ஆக்கப்பட்டுள்ளன. காமிகம், காரணம் முதலிய இவ்விருபத்தெட்டாகமங்களையும், இவற்றின் சார்பான உபாகமங்களையும் பிரணவர் முதலிய மஹரிஷிகளின் பொருட்டு உபதேசித்தருளினரென்பது நீங்களனைவரும் அறிந்த விஷயமே. மூலாகமம் இருபத்தெட்டனுள் மதங்கபாரமேசுவரம் என்னும் ஆகமமும் ஒன்று. இவ்வாகமம் முதலாவது பரமேசுவரனால் ஒருகோடி சுலோகங்களால் உபதேசிக்கப்பட்டும், பின்னர் அனந்ததேவரால் நூறாயிரம் சுலோகங்களால் உபதேசிக்கப்பட்டும், பின்னர் ஸ்ரீகண்டபரமேசுவரரால் மதங்கர் என்னும் பெயருடைய மஹரிஷியின் பொருட்டு மூவாயிரத்தை நூறு சுலோகங்களால் உபதேசிக்கப்பெற்றுள்ளது.

இவ்வாகமத்துள், முதலாவதான ஞானபாதம் ஆயிரத்தைநூறு சுலோகங்களால் அலங்கரிக்கப்பெற்றுள்ளது. அத்தகைய ஞானபாதத்தை இப்பொழுது அச்

சிட்டு வெளியிட்டிருக்கிறோம். ஏனைய மூன்று பாதங்களும் விரைவில் அச்சிட்டு வெளிவரும்.

இந்த ஞானபாதத்தின் பொருளை எவரும் எளிதில் அறியமுடியாமையை யுத்தேசித்துப் பரமசிவனருளால் அவதரித்தவரும் பட்டநாராயணகண்டரின் புதல்வருமான ஸ்ரீபட்டராமகண்டர் என்னும் ஆசிரியரால் ஒரு சிறந்த வியாக்கியானம் இயற்றப் பெற்றுள்ளது. அந்த வியாக்கியானமும் விரைவில் அச்சிட்டு வெளிவரும்.

இக்கிரந்தத்தின் சோதனைக்காகப் பிரதி உதவியவர்கள்.

1. கீழ்வேளூர் ஸ்ரீலஸ்ரீ கலியாணசுந்தரசிவாசாரியரவர்கள்.
2. ,, ஸ்ரீமத் முத்துக்குமாரத் தம்பிரான் சுவாமிகளவர்கள்
3. திருவாரூர் ஸ்ரீலஸ்ரீ சுப்பிரமணிய நயினாரவர்கள்.

குறிப்பு:—அநேகம் பிரதிகளகப்படாமையால் கிடைத்த பிரதியைக்கொண்டு இயன்றவாறு சுத்தஞ்செய்யப்பட்டிருக்கிறது. பண்டிதர்கள் குற்றத்தை நீக்கிக் குணத்தைக் கொள்ளும்வண்ணம் அன்புடன் வேண்டப்பெறுகின்றனர்.

இங்ஙனம்,

சிவாகம சித்தாந்த பரிபாலன சங்கத்தார்,

தேவகோட்டை.

# पटलसूचिका।




शिवाभ्यां नमः ।

## श्रीमतङ्गपारमेश्वरे विद्यापादे

# उपोद्घातप्रकरणम् ।

हिमवत्यचले रम्ये सिद्धचारणसेविते ।
नानाश्चर्यगुणोपेते शिखरं चारुनिर्मले ॥ १ ॥

सिद्धीनामुद्भवो यत्र यत्र नाप्यपमृत्यवः ।
यत्रान्योन्यविरुद्धानां प्रीतिर्भवति तत्क्षणात् ॥ २ ॥

मूर्खोप्यमूर्खतां याति भयाद्भीतो विमुच्यते ।
यत्र नास्त्युपसर्गाणां प्रवेशश्शिखरोत्तमे ॥ ३ ॥

यत्र सन्निहितो नित्यं भगवान्परमेश्वरः ।
तत्रासौ मुनिशार्दूलस्तपसोत्कृष्टमूर्तिमान् ॥ ४ ॥

ज्ञानाग्निदग्धकलुषो वृत्ताम्भः क्षालितात्मवान् ।
शिवध्यानैकचित्तात्मा समाधावास्थितस्सुधीः ॥ ५ ॥

यावन्मारुतसम्पर्कान्मुमोच मधुरं स्वनम् ।
कीचकष्षट्पदावासविवरेण शनैश्शनैः ॥ ६ ॥

तावन्मुनेर्मतङ्गस्य सहसा क्षुभितं मनः ।
भूयो भूयो निनादेन श्रोत्रामृतवपुष्मता ॥ ७ ॥

करिण्यारण्यमातङ्गस्स वशीकृत्य लीलया ।
वनात्परान्मुखस्तद्वच्चित्तलक्ष्याच्छिवात्मकात् ॥ ८ ॥

ततश्चासौ मुनिश्श्रीमान्ज्ञात्वाऽग्रष्टम्मनाश्शिवात् ।
आदाय तरसा वेणुं सुसमं ऋजुमव्रणम् ॥ ९ ॥

श्लक्ष्णत्वचं सुनिष्णातं कृत्वा च्छिद्रैरलङ्कृतम् ।
ततो वादितवान् लेशद्ध्वनिं सप्तस्वरान्वितम् ॥ १० ॥

त्र्यम्बकस्याग्रतो भूत्वा प्रहृष्टेनान्तरात्मना ।
मुनिर्वादितवान्वेणुं भक्त्या नु परया भृशम् ॥ ११ ॥

ततस्स भगवान्नाथः पार्वत्या सहितो हरः ।
स्वं वपुर्दर्शयामास मतङ्गाय तपस्विने ॥ १२ ॥

ददर्श सहसा विप्रश्श्रीकण्ठं विश्वनायकम् ।
स तस्य पादावभ्यर्च्य दण्डवत्पतितो भुवि ॥ १३ ॥

तद्भक्तिमन्योरावेशान्नयनामलवारिणा ।
पादौ प्रक्षाळयित्वा तु स्तोतुमारब्धवान्मुनिः ॥ १४ ॥

भगवन्भूतभव्येश ब्रह्मविष्ण्विन्द्रनायक ।
त्वत्प्रसादगुणाविष्टा दिवि दीव्यन्ति देवताः ॥ १५ ॥

भगवन्निखिलं व्याप्तं जगत्स्थावरजङ्गमम् ।
त्वत्पादाम्बुजसामर्थ्यस्मरणादपि पापिनः ॥ १६ ॥

प्रध्वस्तपापनिचयास्सिद्धिभाजो भवन्ति हि ।
किं पुनर्मुनयो धीरास्त्वय्येवार्पितचेतसः ॥ १७ ॥

विमुक्तास्सर्वपापेभ्यो योगिनो विगतस्पृहाः ।
विरजस्का विशोकाश्च व्यतिक्रान्ता भवार्णवात् ॥ १८ ॥

अन्येऽपि हि सुरेशेन लब्धेप्सितवरा नराः ।
अहमेकोऽल्पभाग्यस्तु दुःखभाक् सुखवर्जितः ॥ १९ ॥

वज्रोपमं महत्पापं मदीयमथवा विभो ।
त्वदीयशक्तयस्तीव्रास्संसारोत्तरणं प्रति ॥ २० ॥

मत्पापनिचयं प्राप्ता लघुतामृतते गताः ।
एतस्मिन्नन्तरे देवः प्रहस्योवाच विश्वराट् ॥ २१ ॥

प्रमृज्याज्ञानपटलं वस्तुरत्नसुशोभया ।
वाण्या प्राश्वास्य तं विप्रं समुत्थाप्य च भूतलात् ॥ २२ ॥

वरमन्विच्छ विप्रेन्द्र यत्त्वया मनसीप्सितम् ।
ततः प्रोवाच हृष्टात्मा रोमाञ्चितवपुर्मुनिः ॥ २३ ॥

कृतकृत्योऽस्मि देवेश त्वत्प्रसादात्किमद्भुतम् ।
प्राप्तव्यं यत्प्रयत्नेन तत्प्राप्तमखिलं मया ॥ २४ ॥

दृष्टे त्वयि जगन्नाथे लोकानुग्रहकारणात् ।
द्विविधार्थप्रदं श्रीमद्वस्तुरत्नगुचर्चितम् ॥ २५ ॥

ज्ञानमज्ञानहन्तारं सुखबोध्यमनाकुलम् ।
विपुलार्थमसन्दिग्धं समासोक्त्या ब्रवीहि मे ॥ २६ ॥

तस्य तद्वचनं श्रुत्वा मतङ्गस्य महात्मनः ।
ज्ञानालयवपुष्मत्या वाण्याऽलुप्तवपुर्गुरुः ॥ २७ ॥

उवाच तस्मै सुप्रीत्या मतङ्गाय महात्मने ।
विचारयुक्तं सद्वस्तु स्फुटमाम्नायदर्शनात् ॥ २८ ॥

यथा व्यवस्थितं न्यायमार्गेणैवानुलोमतः ।
सुकरं सुविभक्ताङ्गं षट्पदार्थमयं शुभम् ॥ २९ ॥

चतुष्पादमिदं शास्त्रमायातममृतात्मकम् ।
धातुर्वक्त्राम्बुजोद्गाराद्विमलाद्गुरुसन्ततौ ॥ ३० ॥

अनुष्टुप्च्छन्दसा पूर्वं निवद्धं कोटिसङ्ख्यया ।
सदाशिवेन देवेन ततोऽनन्तेन धीमता ॥ ३१ ॥

भाषितं लक्षमात्रेण तदेवाऽहं तवाऽधुना ।
तथा संहृत्य संक्षेपाच्छास्त्रं वै पारमेश्वरम् ॥ ३२ ॥

सहस्राणां त्रयेणाऽथ पञ्चभिश्च शतैः परम् ।
अतोऽन्यो यस्समुद्धारस्सस्फुटार्थप्रकाशकः ॥ ३३ ॥

न भवत्यतिसूक्ष्मत्वात्ततोऽयं निश्चयस्स्फुटः ।
उदारवुद्धिर्भगवान्मतङ्ग-
श्शास्त्रार्णवो येन हरादवाप्तः ।
आराध्य वेण्वाकृतनिश्चयेन
तद्वस्तुयुक्तं ह्यखिलं प्रवक्ष्ये ॥ ३४ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
उपोद्घातप्रकरणं समाप्तम् ।

---

## अथ, सूचकपटलः ।

अथाणोर्बन्धसोपानपदपङ्क्तिनिवृत्तये ।
सत्ताभिव्यक्तये चैव वर्ण्यते च बुभुक्षुणा ॥ १ ॥

ज्ञानामृतमसन्दिग्धं भूत्यर्थमतुलं परम् ।
षड्भिः पदार्थैर्माणिक्यैर्वाक्सूत्रेणातिशोभिता ॥ २ ॥

वस्तुरश्मिसहस्राढ्या प्रविचारगुणोज्वला ।
मालेयं धीविलासिन्या मण्डनायाऽवतारिता ॥ ३ ॥

भर्तुर्वाक्यावसानेऽस्मिन्मतङ्गप्रवरो मुनिः ।
भक्तिचन्द्रवपुष्मत्या विनयाम्भोभिषिक्तया ॥ ४ ॥

गिरा प्रोवाच भगवन्देवदेव जगत्पते ।
प्रविभागं पदार्थानां षण्णामपि शिवोदये ॥ ५ ॥

चतुष्पादे महातन्त्रे यथावद्वक्तुमर्हसि ।
ततस्स भगवान् देवस्स्फुरन्माणिक्यशेखरः ॥ ६ ॥

वाक्यानलसमुत्थेन ज्वालाव्यूहेन मन्त्रराट् ।
प्रददाह मुनेस्सम्यगज्ञानं तृणराशिवत् ॥ ७ ॥

विवेको यत्र तत्वानां कार्यकारणभेदतः ।
यथावदुचितं वस्तूभयं चैवोपवर्ण्यते ॥ ८ ॥

विद्यापादस्सविज्ञेयस्सार्धेन परिमण्डितः ।
श्लोकानां च सहस्रेण शास्त्रेऽस्मिन्मुनिसत्तम ॥ ९ ॥

मुद्रामण्डलमन्त्राणां लक्षणं साधकात्मनाम् ।
आचार्याणां च विधिवत्सहस्रेणैव वर्ण्यते ॥ १० ॥

क्रियापादस्सविज्ञेयस्सर्वानुग्रहलक्षणः ।
यत्रोपायो विरक्तानां षडङ्गस्सुमहात्मनाम् ॥ ११ ॥

रागिणामपि योगार्थं योगपादस्स उच्यते ।
शतैः पञ्चभिराख्येयश्श्लोकानामपि विस्तरात् ॥ १२ ॥

समयाचारसद्वादस्थितिस्स्साम्नायलक्षणः ।
चर्यापादस्समुद्दिष्टो यथावत्पञ्चभिश्शतैः ॥ १३ ॥

लयभोगाधिकाराह्वस्थितत्वोक्तिनिदर्शनात् ।
पदार्थः पतिनामाऽसौ प्रथमः परिकीर्तितः ॥ १४ ॥

भोग्यभोक्तृत्वसम्बन्धमायाधारसुसञ्चिते ।
कर्मज्ञानात्मिका कीर्तिर्ये च धर्माः पतौ स्फुटाः ॥ ॥ १५ ॥

शक्त्याख्यस्स पदार्थोऽयं द्वितीयः परिभाष्यते ।
ये भूतभावतत्त्वाख्या मायातः क्षुरितास्सदा ॥ १६ ॥

पदार्थश्च त्रिपर्वो यस्त्रितीयश्शिवशासने ।
योऽस्वतन्त्रः पशुर्भोक्ता क्षेत्री पाश्यः पुमांस्स्फुटम् ॥ १७ ॥

पदार्थः पशुनामाऽसौ चतुर्थो मुनिपुङ्गव ।
धर्माधर्मविपाकाख्या स्स्थिता भोक्तुमिहागताः ॥ १८ ॥

साध्यसाधनभावेन संस्थिता ये परस्परम् ।
पञ्चमस्स तु बोद्धव्यः पदार्थो भोगसंज्ञकः ॥ १९ ॥

ये मन्त्राश्शुद्धमार्गस्थाश्शिवभट्टारकादयः ।
मुद्राश्च शक्तिपूर्वास्स्युर्ये चाऽर्थाः परिविस्तृताः ॥ २० ॥

पादत्रये स चोपायस्संसारोद्धारकारणम् ।
षष्ठोप्यभिहितस्तन्त्रे पदार्थः पारमेश्वरे ॥ २१ ॥

संख्यातन्त्रार्थयुक्त्या गुरुलघुलघुताऽनुक्रमेणैव युक्त्या
पादानां यो विभागस्ससकलजगतो व्यापकत्वाद्विभक्तः ।
संक्षेपोक्त्याऽध्वसंस्था पशुपतिविषयास्सूचिताष्षट्पदार्था-
स्तेषामादौ गरीयान्पतिरिति गदितः प्रोच्यतेऽनुक्रमेण ॥२२॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
द्वितीयस्सूचकपटलः समाप्तः ।

---

## अथ तत्वद्वयलक्षणस्तृतीयः पटलः ।

---

अथ पत्युरधिष्ठानं स्वशक्तिकिरणात्मकम् ।
तस्यां दिवि सुदीप्तात्मा निष्कम्पोऽचलमूर्तिमान् ॥ १ ॥

काष्ठा सैव परा सूक्ष्मा सर्वदिक्काऽमृतात्मिका ।
प्रध्वस्ताऽऽवरणा शान्ता वस्तुमात्रातिलालसा ॥ २ ॥

आद्यन्तोपरता साध्वी मूर्तित्वेनोपचर्यते ।
स्थितावन्योन्यलोकेऽस्मिन् संविदा नोपलभ्यते ॥ ३ ॥

ततस्स मुनिशार्दूलः पृष्टवान्परमेश्वरम् ।
श्रोत्रादीनि प्रमाणानि प्रमेयोऽर्थश्च पञ्चधा ॥ ४ ॥

एतावद्व्यवहारोऽस्मिन्सुप्रतीतो जगत्पते ।
अनुमानागमाख्ये च तत्पूर्वव्यवहर्तृषु ॥ ५ ॥

एभ्योऽतिरिक्तं यद्वस्तु तत्कथं साध्यते विभो ।

परमेश्वर उवाच ।

वाक्यार्ककिरणैस्तीव्रैस्स्फुरद्भिरतिभासुरैः ॥ ६ ॥

विभुर्मार्जितवानाशु मुनेर्भ्रान्त्युत्थितं तमः ।
सर्वएव पदार्थास्स्युस्सत्तामात्रोपलक्षिताः ॥ ७ ॥

स्वधर्मैरवगम्यन्ते स्वागमोक्तिनिदर्शनात् ।
एवमन्योन्यसाधर्म्यवैधर्म्येण विनिश्चयात् ॥ ८ ॥

पत्युर्धर्माश्शक्तयस्तु ताश्च सर्वत्र निस्सृताः ।
शास्त्रेऽस्मिन्युक्तितस्सिद्धा लक्ष्यन्ते त्रिष्ववस्थिताः ॥ ९ ॥

पशौ पाशेषु भोग्येषु तदेव त्रितयं पुरा ।
भोगात्तत्प्रतिपत्तव्यं न च शक्त्युज्झितं क्वचित् ॥ १० ॥

प्रवर्ततेऽस्वतन्त्रत्वादचेतनतया तथा ।
अमूर्तत्वाच्च क्रमशो यथोद्दिष्टाः परस्परम् ॥ ११ ॥

व्यस्तानां शक्यते वक्तुं न कदाचित्स्वरूपकम् ।
उपायोऽपि हि तद्धर्मन्यायेन समवास्थितः ॥ १२ ॥

किंतु साधर्म्यवैधर्म्यविचारोक्त्या पृथक्पृथक् ।
लक्ष्यन्तेऽमी पदार्थास्ते सुसम्प्रक्तास्सुविस्तरे ॥ १३ ॥

संसारे गहने पत्यूरश्मिभिः प्रकटीकृताः ।
शक्तिभ्यश्शक्तिमान् सिद्धो ह्यथवा मुनिपुङ्गव ॥ १४ ॥

अक्षाणि प्रति प्रत्यक्ष्यं मनश्चाक्षमनुत्तमम् ।
सङ्कल्पविषयं सिद्धं सङ्कल्पादेव केवलात् ॥ १५ ॥

[1]प्रवक्तव्यं मुनिव्याघ्र किमन्यत्परिपृच्छसि ? ।
पञ्चमन्त्रतनुश्श्रीमान् सकलः परिपठ्यते ॥ १६ ॥

सुप्रसन्नेन्द्रियग्रामस्सर्वज्ञस्सर्वगोचरः ।
योगयोगीश्वरस्स्वामी स्वतन्त्रः पशुपाशहा ॥ १७ ॥

तस्योक्तिः पौरुषैस्स्थूलैः प्रमाणैर्न प्रबाध्यते ।
प्रमाणमेकं तद्वाक्यं तथ्यमीश्वरभाषितम् ॥ १८ ॥

तस्मादेव परं तत्वमचलं सर्वतोमुखम् ।
यस्मिन् प्राप्तस्य न पुनर्जन्मेहाऽस्ति कदाचन ॥ १९ ॥

इत्थं गुणवतस्तस्मात्तत्वात्तत्वमनिन्दितम् ।
स्फुरद्रश्मिसहस्राढ्यं महस्तत् व्यापकं महत् ॥ २० ॥

परिभाषितमित्येतन्नाम्ना बिन्दुरिहोच्यते ।
चतुर्धावस्थितं वेद्यं प्रेरकं जगतोऽव्ययम् ॥ २१ ॥

---

१ प्रकर्तव्यमिति पाठभेदः ।

शान्तिभेदस्स्थितः पूर्वं यत्राऽसौ परमेश्वरः ।
शान्तिमूर्तिरिति ख्यातो व्रतशान्तैर्महात्मभिः ॥ २२ ॥

सहस्रादित्यसङ्काशैर्विस्फुरद्भिस्समन्ततः ।
कोटीशतसहस्रैस्तु स्ववीरगुणशालिभिः ॥ २३ ॥

विद्याख्यमपरं तस्मात्तेजोमूर्तेर्महात्मनः ।
स्थानं तत्तेजसा दीप्तं कोट्यग्रेण समन्ततः ॥ २४ ॥

व्याप्तं भुवनपालानां विश्वरूपकृतात्मनाम् ।
तदधस्तात्प्रतिष्ठाख्यं स्थानमत्यद्भुतोदयम् ॥ २५ ॥

तत्राप्यमृतमूर्तेस्तु परिवारोऽमृतात्मकः ।
लक्षायुतसहस्राणि यत्रामृतवपुष्मताम् ॥ २६ ॥

शिवानां शिवमार्गेऽस्मिन् व्याख्यातं परमार्थतः ।
विनिवृत्ताऽधिकारस्य पञ्चमन्त्रमहातनोः ॥ २७ ॥

गच्छतः परमां काष्ठां विश्रामो यत्र धीमतः ।
तन्निवृत्तिरिति ख्यातं स्थानं स्थानवतां वरम् ॥ २८ ॥

स्थिरमूर्तिरमोघात्मा यत्राऽसौ परमेश्वरः ।
तस्मिंस्स्थित्वा प्रतिष्ठाति देवोऽमृततनुश्शिवः ॥ २९ ॥

एवं क्रमात्सुदीप्ताङ्गो विद्यादेहव्यपाश्रयात् ।
ततश्शान्तत्वमायाति शान्तश्च परमेश्वरः ॥ ३० ॥

शान्त्यतीतं परं तत्वमविनाशव्ययात्मकम् ।
येनोन्मीलितसद्भावाः पशवश्शिवतां गताः ॥ ३१ ॥




सदाशिवस्य देहस्य लयस्तत्त्वेऽतिनिष्कळे ।
चतुर्मूर्तिमयं शुभ्रं यत्तत्सकळनिष्कळम् ॥ ३ ॥

तस्मिन् भोगस्समुद्दिष्टः पत्युर्विश्वस्य सर्वदा ।

धातुर्वीर्यात्मकं स्याद्विभवगुणगणापूरितं मन्त्रमुख्यैः,
योनिस्स्यादक्षराणामवितथमतुलं शक्तिगर्भं च मुख्यम् ।
स्थानं भोगाय भोक्तुर्न विचलति विभोश्शाश्वतं विश्वमूर्तेः,
व्याख्यातं निष्प्रपञ्चं तदपि न विरतौ वर्ण्यतेऽस्याधिकारः ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
तत्वद्वयलक्षणस्तृतीयः पटलस्समाप्तः ।

---

# अथ पतिपटलप्रारम्भः ।

अथाऽधिकारिणः पत्युः क्रीडतः परमं पदम् ।
स्वतन्त्रस्याऽपि वक्तव्यं स्वभावोऽस्य यतः पुरा ॥ १ ॥

क्रीडंस्ततोऽवतीर्याऽसौ विन्दौ तु परमेश्वरः ।
सांसिद्धिकेन भावेन यथा स्यादुपबृंहितः ॥ २ ॥

अतिरस्कृतवीर्येण प्रभावेणातिसर्पिणा ।
सर्वाध्वप्रकटेनाऽयं कर्ता कार्यस्य विश्वराट् ॥ ३ ॥

चलतस्तस्य बिन्द्वाख्यात्स्थानाद्धातुर्महात्मनः ।
तत्तेजो नवधाभिन्नं स्फुटं योगबलोत्कटम् ॥ ४ ॥

योगेनाऽधिष्ठितं सम्यक्परेण परमेष्ठिनः ।
योगोऽस्य शक्तयस्त्वाख्या विस्फुरन्ति समन्ततः ॥ ५ ॥

ईशानी पूरणी पाञ्ची वामा मूर्तिश्च पञ्चमी ।
एताभिः परमेशानश्शक्तिभिस्समधिष्ठितः ॥ ६ ॥

विशुद्धविप्रड्द्वारैः प्रवर्षत्यखिलेऽध्वनि ।
स्वयोगोद्भूतकिरणैर्विद्याविद्येश्वरैश्शिवैः ॥ ७ ॥

वृतस्स भगवान् देवो मायाचक्रप्रवर्तिभिः ।
तेऽतीवाक्रान्तविभवाः पत्युराज्ञानुवर्तिनः ॥ ८ ॥

अनन्तोऽनन्तवीर्यात्मा सूक्ष्मश्चातिवपुर्महान् ।
ततश्शिवोत्तमो देवस्तृतीयः परिकीर्तितः ॥ ९ ॥

एकनेत्रैकरुद्रौ च त्रिमूर्तिरपरो महान् ।
श्रीकण्ठश्च महातेजाः शिखण्डिश्च महाद्युतिः ॥ १० ॥

एते रुद्राणवस्सिद्धाः क्रियाज्ञानबलोत्कटाः ।
बलं च तेजसः पत्युर्विकारैः प्रकटीकृतम् ॥ ११ ॥

तस्मादेवावताराख्यात्समयात्परमात्मनः ।
निसर्गेणैव शक्तीनां व्यापारोऽतीव पुद्गलः ॥ १२ ॥

येनाऽऽशु ते महावीर्या विद्येशाः प्रकटीकृताः ।
यैर्वृतः परमे व्योम्नि राजते मन्त्रनामकः ॥ १३ ॥

तनुर्यस्योपचारेण पञ्चमन्त्रमयी शिवा ।
ईशानमूर्धा पुंवक्त्रो ह्यघोरहृदयः प्रभुः ॥ १४ ॥

उच्यते वामगुह्योक्ता सद्योमूर्तिस्स्थिता पृथक् ।
हारिणी जननी तावद्बोधयित्री च शक्तयः ॥ १५ ॥

एताश्शक्तिमतः प्रोक्ताः शक्तयोऽष्टौ महामुने ।
आसां वीर्यं विभागश्च वक्तव्यः परतो यतः ॥ १६ ॥

ततोऽस्मिन्नेष्यते वक्तुं तथाप्युद्देशतोऽधुना ।
अष्टौ धर्मा महेशस्य शक्त्यष्टकविधौ स्थिताः ॥ १७ ॥

वक्ष्यन्ते ज्ञापनार्थं तु संक्षेपेण न विस्तरात् ।
मूर्धा वै परमा काष्ठा तच्चैवेशित्वमद्भुतम् ॥ १८ ॥

ईशानीभिस्तदुत्थाभिरणूनां बलमादरात् ।
विनिष्कृत्य मलात्तूर्णं योजयत्यमले पदे ॥ १९ ॥

यतस्तस्मात्स भगवानीशमूर्धेति चोच्यते ।
वक्त्रं तेजोमयं तस्य येनोद्गीर्णास्समन्ततः ॥ २० ॥

ज्ञानाग्निविप्रुषस्तीव्राः पूरयन्त्यखिलं जगत् ॥ २१ ॥

पुंशब्दः पवने प्रोक्तः पुनात्यस्मिंश्चराचरे ।
अज्ञाननिचयं पुंसां तस्मात्पुंस उदाहृतः ॥ २२ ॥

चलच्छक्तिमयं वक्त्रं तच्च सर्वगतं विभोः ।
पुमान् वक्त्रे स्थितो यस्मात्तस्मात्पुंवक्त्र इष्यते ॥ २३ ॥

सद्भावो हृदयं प्रोक्तमघोरश्शान्त उच्यते ।
सद्भावेनैव शान्तात्मा घोरस्संसार एव हि ॥ २४ ॥

सर्वस्मान्नेष्यते पत्युरघोरहृदयस्ततः ।
रहस्योक्त्या स्मृतं वामं पत्युस्तेजः क्रियात्मकम् ॥ २५ ॥

वामोद्गारैर्यतः कर्ता करोति रचनां स्फुटम् ।
चित्रां भुवनमालाख्यां तत्वाख्यं च स विश्वराट् ॥ २६ ॥

वामोक्त्या विपरीतत्वं प्रपञ्चेऽस्मिन् सदाशिवः ।
लक्ष्यते विपरीतेन विरुद्धेनातिकर्मणा ॥ २७ ॥

प्रददात्यणुसङ्घस्य यत्फलं मनसि स्फुटम् ।
यतस्तस्मात्स भगवान् वामगुह्यः प्रभाष्यते ॥ २८ ॥

मुक्तिश्शरीरं यत्तस्य स्ववीर्यविभवात्मकम् ।
सम्पन्नं च पराद्भावात्सुव्यक्तं क्रीडनाय तत् ॥ २९ ॥

स्वभावस्यापरो भावस्सा क्रीडेत्युपचर्यते ।
सद्योमूर्तित्वमापन्नं सद्योमूर्तिस्ततस्स्मृतः ॥ ३० ॥

एवं मन्त्रास्तु पञ्चैते यैर्निबद्धतनुश्शिवः ।
घटितं पञ्चभिस्तस्य शरीरममलं शुभम् ॥ ३१ ॥

तदप्यत्र यथा सिद्धं शक्तित्रयनिदर्शनात् ।
हारिणी या शिवस्योक्ता हर्तुर्हरणशालिनी ॥ ३२ ॥

हरणं हानिरुद्दिष्टा भोगेष्वभिरतात्मनाम् ।
पुद्गलानां शनैर्गत्वा लिङ्गं संहृत्य वेगतः ॥ ३३ ॥

निवर्तयति सम्भोगं तस्मिन्नेव भवालये ।
विनिवेशयितुं शक्ता पत्युस्सा वशवर्तिनी ॥ ३४ ॥

अथवोन्नतिसामर्थ्यात्पुमनुध्यातमादरात् ।
प्राक्च्छिवेन परं स्थानं समाहृत्य नयेद्भृशम् ॥ ३५ ॥

हरणाद्धारिणी हर्तुर्हार्येष्वेवोपलक्षिता ।
यतोऽस्वतन्त्रभोगात्मा प्रवृत्तः पाशगोचरे ॥ ३६ ॥

व्याघातभागतस्तस्य सा शक्तिः पारमेश्वरी ।
प्रवृत्ता लक्ष्यते सम्यक् न चापैति स्वकं बलम् ॥ ३७ ॥

जननी कारणस्योक्ता शक्तिर्या क्रीडतः प्रभोः ।
प्रवृत्ता स्वेन वीर्येण तोयवत्पतिता क्षितौ ॥ ३८ ॥

मायात्मकेऽणुबीजानां जननीं जननात्मिकाम् ।
तथात्मवीर्यवर्तिन्या पञ्चमन्त्रतनुश्शिवः ॥ ३९ ॥

जगतोऽस्याऽखिलस्याऽपि तस्माज्जनयिता पिता ।
एवं सुसूक्ष्मकिरणा शक्तिर्जननशीलिनी ॥ ४० ॥

प्रमृज्यतेऽणुसङ्घस्य माता जन्मनि जन्मनि ।
रोधयित्री च या पत्युः प्रसृतस्यामितात्मनः ॥ ४१ ॥

लक्ष्यते पशुसङ्घस्य नियमस्थितिदायिका ।
या समर्था विधौ रोद्धुं जगद्भोगेष्वभीप्सितम् ॥ ४२ ॥

शक्तिस्सा रोधिनी प्रोक्ता यतो रोधयिता प्रभुः ।
पतिशक्तित्रयाविष्टं जगत्स्थावरजङ्गमम् ॥ ४३ ॥

ह्रीमत्यज्ञानमोहेन दुःखादिपरितापितम् ।
यावत्सोन्मीलनीशक्तिश्शिवरागेण संयुता ॥ ४४ ॥

न पतत्यतितेजिष्ठा नित्यानुग्रहशालिनी ।
तन्निपाताच्च तस्येत्थमज्ञस्याप्यभिलाषिणः ॥ ४५ ॥

बुद्धिरुत्पद्यते कस्माद्विवेकेनात्मवर्तिना ।
विवेकिनो विरक्तस्य जिज्ञासा चोपजायते ॥ ४६ ॥

जिज्ञासोपेतचैतन्यं पशुसंसारसागरात् ।
जिघृक्षया युनक्त्येनं युक्तं प्रेरयिता प्रभुः ॥ ४७ ॥

प्रेरणे प्रेरकश्शीमान् द्वयोरपि स मन्त्रराट् ।
अनुग्राह्यस्य विनये तथाऽनुग्राहकस्य च ॥ ॥ ४८ ॥

कारुण्येत्वनयोरस्मात्तयोर्योगस्सुदुर्लभः ।
नाप्रसन्ने प्रभौ यस्माद्द्वारमाप्नोति पुद्गलः ॥ ४९ ॥

मुक्तये गुरुनामानं व्यक्तं वर्त्मसु निर्मलम् ।
यं प्राप्य पशवस्सिद्धाः पतित्वमुपयान्ति हि ॥ ५० ॥

तस्य देवादिदेवस्य कारणत्वमनिन्दितम् ।
भर्तुर्ये शासने देवा महान्तश्चक्रवर्तिनः ॥ ५१ ॥

तेषां भुवनविन्यासस्स्वासु स्वासु विभूतिषु ।
न तेषां परिसंख्यानं निर्मलानां महात्मनाम् ॥ ५२ ॥

यस्तेषां विभवस्सूक्ष्मस्सूक्ष्माचारश्च सुव्रतः ।
मनोऽभिलाषितान् भोगान् भुञ्जते ते महाबलाः ॥ ५३ ॥

प्राणिनश्शुद्धवृत्तिस्थास्सततं ध्यानतत्पराः ।
सदाशिवार्पिताधियस्तेषामत्रोदितं परम् ॥ ५४ ॥

मेरुपृष्ठं यथा प्राप्तास्तृणलोष्टादयो भृशम् ।
प्राप्नुवन्ति सुवर्णत्वं तद्वत्सादाशिवे पदे ॥ ५५ ॥

सदाशिवसमास्सर्वे किंतु ते सेश्वरा मताः ।
कार्यत्वेनाणुरुद्दिष्टस्तावत्सन्तानगोचरे ॥ ५६ ॥

यावद्धूरेण हारिण्या न सम्यग्ध्रियते बलात् ।
पश्चाद्वृत्ते शिवत्वेऽणोः कारकत्वेन कारणम् ॥ ५७ ॥

न तं प्रति कदाचित्स्यात्सोऽपि कार्यत्वगोचरात् ।
उत्तीर्णः पतिसामर्थ्यात्स्थितश्शान्तपदे यतः ॥ ५८ ॥

दानं नाम स्वसत्तैव या सा ज्ञानक्रियात्मिका ।
सा शक्तिस्तस्य संस्पर्शाद्व्यक्तीभूता सुनिर्मला ॥ ५९ ॥

प्रत्युत्थानं तदेवोक्तं न स्वयं व्यज्यते पशोः ।

नित्योऽविकारी च यथाऽध्वमूर्ति-,
स्स्थितोऽग्रणीर्यश्च स विश्वनेता ।
यथा मयोक्तस्सकलाकलोक्त्या
शक्तेर्विभागं ह्यधुना विधास्ये ॥ ६० ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे

पतिपटलस्तुरीयस्समाप्तः ।

# अथ पतिपदार्थे शक्तिपटलप्रारम्भः ।



अथ कारणकार्यत्वे शक्तयो या व्यवस्थिताः ।
ताश्चैवात्राऽधिकारिण्यः प्रतीतास्सर्वगोचराः ॥ १ ॥

संलब्धोन्मीलनास्सत्यस्तत्वेऽस्मिन्नीश्वराह्वये ।
दर्शयन्ति स्वमात्मानमधिकारे नियोजिताः ॥ २ ॥

तत्वं यद्वस्तुरूपं स्यात् स्वधर्मप्रकटात्मकम् ।
तत्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शनात् ॥ ३ ॥

यदच्युतं स्वकाद्वृत्तात्ततं शाक्तवशं जगत् ।
तत्तदन्येन वा यत्स्यात्तत्तत्वं तत्वसन्ततौ ॥ ४ ॥

तास्मिन्नेवेश्वरे तत्वे संस्थिताः पारमेश्वराः ।
शिवेच्छानुमतास्सर्वे जगतः प्रभविष्णवः ॥ ५ ॥

शिवशक्तिगुणामोदक्लृप्तोन्मीलितशक्तयः ।
रमन्ते विविधैर्भोगैर्भुवनेषु महत्सु च ॥ ६ ॥

विद्याऽविद्येश्वरीभिस्ते सुशोभाभिरनिन्दिताः ।
इत्थं गुणयुतास्सर्वे बोद्धारः पारमेश्वराः ॥ ७ ॥

तेषामथाग्रणीश्शूरस्समर्थः परमेश्वरः ।
ज्येष्ठोऽधिकारी विश्वात्मा वृतो रुद्रैस्सहस्रधा ॥ ८ ॥

यतस्सोऽर्हति कर्तृत्वे नियोगोऽस्य ततश्शिवात् ।
परिपाक्या ततः प्राप्तस्स च तस्मै समर्पितः ॥ ९ ॥

निर्वाति कृतकृत्यत्वादनन्तोऽनन्तवीर्यवान् ।
ततस्तस्मिन् समारूढे पञ्चमन्त्रतनुश्शिवः ॥ १० ॥

ददात्याज्ञां सुसूक्ष्मस्य विद्येशस्य महात्मनः ।
स च प्राप्तवरश्श्रीमान् भर्तुराज्ञाऽनुवर्तकः ॥ ११ ॥

तत्तन्त्रः पदमानन्दमधिष्ठाय महायशाः ।
निर्वर्तयत्यधश्चक्रं यत्तन्मायात्मकं जगत् ॥ १२ ॥

एवं शिवोत्तमस्याऽपि सूक्ष्मस्योपरमे शिवः ।
प्रददातीशसञ्ज्ञस्य कारणत्वमनिन्दितम् ॥ १३ ॥

पदात्पदं विचरतो ह्येकैकस्य महात्मनः ।
यावत्सा परमा काष्ठा भावश्चक्रस्य कारणम् ॥ १४ ॥

अव्युच्छेदाय रुद्राणां कृत्वा शक्तिबलान्वितम् ।
नियुनक्ति पदे तस्मिन्यवीयांसं शिखण्डिनम् ॥ १५ ॥

एवं तेऽनुगतास्सर्वे तदिच्छानुविधायिनः ।
अनन्तेशस्य नाथस्य यतस्तेभ्यो महत्तमः ॥ १६ ॥

तदायत्ता विचेष्टन्ते सुखिनस्सर्व एव ते ।
न केवलं महेशाना विद्याचरितविक्रमाः ॥ १७ ॥

तिस्रः कोट्योऽर्धकोटिश्च नियोगेनाऽधिरोपिताः ।
विद्यातत्त्वविधौ वाच्यास्तासामेव विभूतयः ॥ १८ ॥

यत्स्वरूपमनन्तस्य पतिशक्तिबलान्वितम् ।
तेन सर्वं विजानाति करोति च महाबलः ॥ १९ ॥

पत्युश्शक्तिः परा सूक्ष्मा जगदुन्मीलने क्षमा ।
तया प्रभुः प्रबुध्यात्मा स्वतन्त्रस्स सदाशिवः ॥ २० ॥

प्रबुध्यते महातेजाः ज्ञानशक्तिकृतास्पदः ।
द्विधाभावं समापन्नो स्थानभेदेन सा पुनः ॥ २१ ॥

स्थानभेदेन कर्तृत्वं यस्मात्तस्योचितं सदा ।
तत्सामर्थ्यादनन्तस्य तत्तेजः पारमेश्वरम् ॥ २२ ॥

भेदैष्षोडशभिर्भिन्नं क्रियाज्ञानात्मकं शिवम् ।
अतिरस्कृतसामर्थ्यं जगत्यस्मिन् सितासिते ॥ २३ ॥

व्यापाराः कृत्स्नसम्पूर्णा नामभेदेन सर्पितम् ।
क्षोभिका जननी चैव रोधयित्री च कीर्तिता ॥ २४ ॥

गोप्त्री नेत्री च योक्त्री च त्राणा वामा नियामिका ।
रौद्री च प्लाविका श्रद्धा भाविनी द्वादशी मता ॥ २५ ॥

ज्वाला प्रह्लादिनी चैव स्तंभिनी विकिराऽपरा ।
दश षट् च परास्सूक्ष्माश्शक्तयोऽनन्ततेजसः ॥ २६ ॥

आभ्योऽन्याश्चाप्यसंख्येयास्ताश्च तत्वानि संस्थिताः ।
वक्तव्या या यथा तत्वं तत्वधर्मेण सङ्गताः ॥ २७ ॥

संक्षेपोक्त्या न विस्तारात् स्फुटार्थप्रतिपादिकाः ।
तत्र तावदनन्तस्य क्रीडतः पत्युरिच्छया ॥ २८ ॥

स्वभावस्य च्युतिः क्रीडा स च क्षोभ इति स्मृतः ।
क्षोभे सति जगत्कर्तुश्शरीरमभवत्पुरा ॥ २९ ॥

येनाऽवतीर्य संभोगात्तत्वादीश्वरसंज्ञकात् ।
व्यापारस्य ततोऽणूनां कृतवान् भुवनं महत् ॥ ३० ॥

स्वशक्तिव्यूहसामर्थ्यान्मायातत्वं सुरेश्वरः ।
अचालयक्रियायुक्तश्शक्त्या क्षोभिकया तदा ॥ ३१ ॥

सुस्थितस्याऽथ जगतस्सितासितविभूतिषु ।
पशूनां सहजा क्षोभं प्रकरोत्यव्ययात्मिका ॥ ३२ ॥

क्षुब्धो विरज्यते स्थानान्नचान्यस्समुपैति हि ।
विभ्रान्तचित्तो विरतस्तथाऽपि न विमुञ्चते ॥ ३३ ॥

परं न लभमानस्सन् क्षोभिकाऽऽकुलितेन्द्रियः ।
एवं हि क्षोभको देवः क्षोभ्याश्च पशवस्स्मृताः ॥ ३४ ॥

न्यग्भूतस्याणुसङ्घस्य मायोदरगतस्य हि ।
करोत्युच्छूनतां भावं भोगाऽभिमुखतां तु या ॥ ३५ ॥

जनन्या जनितश्चायं पशुर्भोगेषु रज्यते ।
जनिता लक्ष्यतेऽणूनां पतिर्जन्मनि जन्मनि ॥ ३६ ॥

भावोऽन्यो यस्स्वभावात्तु शुभो वा यदि वाऽशुभः ।
जनयित्वा तु जन्यस्य पशोस्स परमेश्वरः ॥ ३७ ॥

यच्छत्यविकलान् भोगान् यया सा जननी मता ।
रोधयित्री तु या पत्युरावृत्य जगतो धुरम् ॥ ३८ ॥

रुणद्धि स्थितयेऽत्यर्थं नेच्छन्नपि पशुं बलात् ।
कर्तव्येष्वथ कार्येषु प्रस्थितस्य क्रियावतः ॥ ३९ ॥

प्रवृत्तौ धारयेच्चित्तं येन तं प्रति पुद्गलः ।
प्रवर्ततेऽथ सामर्थ्यादुत्साहे च विमूढधीः ॥ ४० ॥

रोधयित्री तु या शक्तिर्यतो रोधयिता प्रभुः ।
धर्माऽधर्मविपाकेषु भोक्तुरभ्युद्यतस्य हि ॥ ४१ ॥

असमञ्जसहानार्थं रक्षणाय च सर्पिता ।
गोप्त्री गोपयितुं शक्ता जगदेतच्चराचरम् ॥ ४२ ॥

स्वं स्वं तेभ्योऽणुसङ्घेभ्यः स्वोचितं फलमादरात् ।
नान्येन शक्यते भोक्तुं गोप्त्र्या संवर्तुलीकृतात् ॥ ४३ ॥

पशुश्च सुखदुःखाभ्यामन्यायेन कथञ्चन ।
न शक्यते वशीकर्तुं यतोऽमूर्तेऽप्यचेतने ॥ ४४ ॥

गोप्तुर्गोप्त्रीवशादिष्टां तनुमुज्सृज्य तत्फलम् ।
न जह्यात्तद्विरागेऽपि यतो गोप्त्र्या तु रक्ष्यते ॥ ४५ ॥

एकस्मात्क्षीणविभवं स्थानादन्यत्पशुं बलात् ।
स्थानं नयति या पत्युश्शक्तिर्नेत्रीति सा स्मृता ॥ ४६ ॥

नेता नेयस्य वा पुंसः प्रध्वस्ताशेषकर्मणः ।
जन्मन्यपश्चिमे स्पृष्टो यदा शक्त्या च भावितः ॥ ४७ ॥

निर्धूतकलुषं शान्तं तदा स परमेश्वरः ।
नेता नयत्यसन्देहाद्यत्तत्पदमनामयम् ॥ ४८ ॥

योक्त्री योजयितुं शक्ता नानायोन्यन्तरेष्वणून् ।
एवं नेत्र्या समीपे तु [1]व्यूढं भर्तुर्वशानुगा ॥ ४९ ॥

---

१. युङ्क्ते इति पाठभेदः ।

दुःखारिवशसम्प्राप्तं तृप्तमत्यन्तविह्वला ।
पुंदुःखान्तरमाविश्य शक्तिर्वै पारमेश्वरी ॥ ५० ॥

तयोर्वियोजने शक्तो विमुक्ताणुस्तया यदा ।
स्वस्थस्त्वत्र भवेद्यस्मात्तस्मात्त्राता प्रभुस्स्मृतः ॥ ५१ ॥

वामाधस्स्रोतोनिर्दिष्टा यस्मिंस्ते परमाणवः ।
प्लवन्ति विरलेनैव वासितास्तेन कर्मणा ॥ ५२ ॥

संरुद्धशक्तयो मूढा वामयाऽऽत्मवशीकृताः ।
नियामिकाश्च बलवत्स्वोचितास्वणुवृत्तिषु ॥ ५३ ॥

अपश्यन्तः परां काष्ठां न विरक्ता बुभुक्षवः ।
प्रकृत्याऽधोमुखं सम्यक् चैतन्यान्नियमात्मिका ॥ ५४ ॥

नियमे स्थापयेद्यस्मात्तस्मान्नामद्वयं मुने ।
अस्याश्शक्तेर्मयाऽऽख्यातं वामा चेति नियामिका ॥ ५५ ॥

रुक्पाशनिचयं भोक्तुर्येयं द्रावयितुं क्षमा[1] ।
रौद्रं भयानकं विद्धि मायावटसुगह्वरम् ॥ ५६ ॥

तस्मादुद्धरणे रौद्री रुद्रस्येयं वशानुगा ।
या प्लावयति सन्तप्तं भोगाऽमृतसुशीकरैः ॥ ५७ ॥

संमार्ज्य दुःखसन्तानं भोगिनं भोगतत्परम् ।
प्लाविकेयं समुद्दिष्टा तन्त्रेऽस्मिन्पारमेश्वरे ॥ ५८ ॥

कुत्सितेष्वपि भोगेषु श्रद्धयाऽऽत्मवशीकृतः ।
स्वाचारमवमत्याऽऽशु तद्वृत्तौ सम्प्रवर्तते ॥ ५९ ॥

---

१. या यत्र वर्धितुं क्षमेति पाठभेदः ।

सेयं श्रद्धा समाख्याता शक्तिर्धातुः क्रियात्मिका ।
धर्मोऽधर्मद्वयावस्थं तयोरभ्यधिकैषिणम् ॥ ६० ॥

भाविनी भावयत्येव पुद्गलं स्वेन तेजसा ।
येनाऽभावेऽपि भावत्वं तद्वशात्प्रतिपद्यते ॥ ६१ ॥

चितेरुन्मील्य सामर्थ्यमसद्भोगेष्वभिप्लुतम् ।
तान् प्रज्वाल्य रुषाऽनिष्टान् सद्भोगेष्वणुमंजयेत् ॥ ६२ ॥

अथवाऽप्यतिदीप्तात्मा ज्वालयाऽऽत्मवशीकृताः ।
जुगुप्सते जगत्सर्वमनित्यमशुभाऽशुभम् ॥ ६३ ॥

ततस्स भगवानीशस्तं युनक्त्यात्मशासने ।
तदाह्लादितसर्वाङ्गः प्रह्लादिन्या गुरुं प्रति ॥ ६४ ॥

शुश्रूषणैकचित्तस्स्याद्भावितात्मा गतस्पृहः ।
स्निग्धोऽतिरक्तो हृष्टात्मा सहिष्णुः कृतनिश्चयः ॥ ६५ ॥

शतेनाप्यपकाराणां नित्यं च प्रकृतोऽपि हि ।
परैर्विशिष्यमाणोऽपि प्रयोगैर्विविधैर्भृशम् ॥ ६६ ॥

न विरज्यति सामर्थ्यात्सदाह्लादात्मचेतनः ।
शक्तिः प्रह्लादिनी पत्युस्सदा प्रीतिविवर्धिनी ॥ ६७ ॥

स्तम्भिन्या सङ्गतः कर्तुश्शक्त्या सङ्गृह्य सादरम् ।
यत्र यत्र स्थितोऽसम्यगुद्वेगवशगोऽपि सन् ॥ ६८ ॥

न चलत्यतिसंसक्तस्स्तम्भिन्या स्तम्भितस्तु सन् ।
विकिरा नाम या प्रोक्ता तया स परमेश्वरः ॥ ६९ ॥

भूतभावात्मतत्वाख्यजगत्स्थावरजङ्गमम् ।
संक्षुब्धं ग्रन्थिविवरात्क्षोभितस्य जगन्निधेः ॥ ७० ॥

पूर्वं क्षोभिकया क्षोभ्य पश्चात्प्रविकिरत्यसौ ।
विकिरिण्या यथोपात्तं स्वाङ्गावयवगोचरे ॥ ७१ ॥

व्यक्तीकरोति जगतश्शरीराणि सहस्रधा ।
अनादिव्यापकं पुंसां शरीरावधि निश्चयात् ॥ ७२ ॥

विकिरत्यात्ममर्यादा न्यायेन समतां नयेत् ।
नातिरिक्तं न च न्यूनं युगपद्वेद्यमेव तत् ॥ ७३ ॥

शक्तयः कारणस्यैव दिङ्मात्रेणोपवर्णिताः ।
परमार्थेन नान्तोऽस्ति जगत्यस्मिन् प्रविस्तरे ॥ ७४ ॥

अभ्युद्गताः कर्तुरमोघवीर्याः प्रविस्तृतास्ताश्च जगत्प्रपञ्चैः ।
प्रकाशितं याभिरुदारवृत्ति स्वकं स्वकं कारणकार्यभावात् ॥ ७५ ॥

उन्मीलिताः पाशविशेषशोभाः कृताश्च सर्वे पशवस्समृध्या ।
भोगेषु पक्त्यां पुनरागतानां विभाजितं कर्मफलं यथावत् ॥ ७६ ॥

प्रभोः स्थितास्स्वात्मवशा महत्यस्ताश्शक्तयोऽशेषजगत्प्रदीपाः ।
पतिप्रसङ्गेन हि सूचितास्ते विद्यामिदानीं शृणु विप्रमुख्य ॥ ७७ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
शक्तिपटलस्समाप्तः ।

---

१. युक्त्या, इति पाठभेदः ।

# अथ पुम्प्रधानेश्वरसाधनपटलः ।

अथ शक्तिसमूहस्य चरतोऽस्य जगत्पतेः ।
प्रतिपत्तिर्यथा लोके पशूनां पाशसञ्चये ॥ १ ॥

पाश्यः पाशयिता पाशास्त्रयमेतद्व्यवस्थितम् ।
साध्यसाधनभावोक्त्या यथावत्प्रकटं भवेत् ॥ २ ॥

तथा सम्यक्प्रवक्तव्यं तावद्विद्याऽवधार्यताम् ।
स एव मुनिशार्दूलो मतङ्गः प्रत्यवस्थितः ॥ ३ ॥

ततः प्रोवाच भगवान् मतङ्गाय महात्मने ।
पशुरात्मा समुद्दिष्टः क्षेत्री क्षेत्रज्ञ एव च ॥ ४ ॥

शरीरी चेति रुद्धात्मा भोक्ता च परिभाष्यते ।

मतङ्गः ।

न पशुर्नाममात्रेण शरीरी परिभाष्यते ॥ ५ ॥

शरीरेऽस्मिन् कुतो ह्यात्मा शरीराद्व्यतिरिच्यते ।
यथाम्बुद्रव्यसंयोगात्स्पन्दनादिविवर्तना ॥ ६ ॥

तद्वदेव शरीरेऽस्मिन् विज्ञानं योगजं विभो ।

परमेश्वरः ।

द्रव्यसङ्करजं यत्तद्विज्ञानं जलजादिवत् ॥ ७ ॥

न सर्वत्र भवेत्स्पष्टं न चैवाऽऽकुञ्चनादिकम् ।
न श्रोत्रादिपरिज्ञानं द्रष्टुर्नो काल एव वा ॥ ८ ॥

सुखदुःखविवेकित्वं न गतिर्वृद्धिरेव च ।
वृद्धिश्चेदूष्मणाकस्माद्ध्रासो वैधर्म्यतस्स्थितः ॥ ९ ॥

अक्षाणामप्रवृत्तत्वात्प्रभूतत्वाच्च युक्तितः ।
व्यवहाराच्च साटोपात्प्रतिज्ञा या च लक्ष्यते ॥ १० ॥

यस्मात्सत्यपि संयोगे कीर्त्यते पञ्चतां गतः ।
न तत्र स्वल्पमप्यस्ति विज्ञानं मुनिपुङ्गव ॥ ११ ॥

भोक्ता भोग्यस्य संसिद्धौ नाङ्गुल्यग्रेण कुत्रचित् ।
स्वाग्रं वै शक्यते स्प्रष्टुं तद्‌भूतात्मवर्त्मना ॥ १२ ॥

भूतानां रचना भोग्या पक्षेऽस्मिन् भवति स्थिता ।
ज्ञानं ज्ञेयं च ज्ञाता च विभक्तानि पृथक् पृथक् ॥ १३ ॥

ज्ञेयं तावत्पदार्थानां यादृग्रूपं स्वकं स्वकम् ।
ज्ञानशक्तेर्यतो ज्ञातः कर्तुश्चैव न संशयः ॥ १४ ॥

प्रत्यक्षमपि शास्त्रेऽस्मिन् व्यपदेष्टुं न शक्यते ।
भोगैः प्रसाद्ध्यते भोक्ता भोगाश्च विविधा मताः ॥ १५ ॥

अक्षार्थसङ्गमोत्थं यद्विज्ञानं प्रत्ययात्मकम् ।
तेनाऽसौ वासितात्मा तु परत्र विनिवेदयेत् ॥ १६ ॥

वागिन्द्रियेण स्पष्टेन मनसा पूरितेन तु ।
यः प्रपञ्चोऽनुमानाख्यस्सामान्यो व्यवहर्तृषु ॥ १७ ॥

तेनानुमीयते ह्यात्मा दृक्दर्पणनिदर्शनात् ।
संहतस्याप्यशेषस्य शयनादेर्विपश्चिता ॥ १८ ॥

---

१, तत्तु भूतात्मेति पाठभेदः ।

भोक्ता सम्प्रतिपत्तव्यः स पुमांस्तत्र कीर्तितः ।

मतङ्गः ।

केचिद्विज्ञानमात्रस्य सन्तानस्य महाधियः ॥ १९ ॥

अव्युछिन्नप्रवाहस्य हीयमानस्य सर्वदा ।
नात्मन्यवस्थितस्यास्य वस्तुशून्यस्य युक्तितः ॥ २० ॥

योऽवस्थितस्सदा द्रष्टा स कथं गम्यते विभो ।

परमेश्वरः ।

शून्यं तावत्प्रमाणत्वान्न कदाचिद्भवेज्जगत् ॥ २१ ॥

नाप्रमाणात्प्रपत्तव्यं कल्पना विद्यते सतः ।
नासतो वस्तुशून्यत्वान्मृत्पिण्डेन पटो यथा ॥ २२ ॥

निरुध्यतेऽनावस्थानाद्विज्ञानं प्रत्ययात्मकम् ।
यदतीतमतीतं तु स्मरणं केन हेतुना ॥ २३ ॥

तादृगेव क्षणादन्यत्क्षणान्तरमभीप्सितम् ।
आजन्ममरणात्तस्य न विज्ञानस्य कुत्रचित् ॥ २४ ॥

व्यभिचारो भवेल्लोके स च सर्वत्र दृश्यते ।
एकस्मात्प्रत्ययादन्यत्प्रत्ययान्तरगोचरम् ॥ २५ ॥

न प्राप्नोति तदा सर्वे योगिनो न च योगिनः ।
अथवाऽजस्रमुत्पत्तिरिष्यते समवायजा ॥ २६ ॥

विज्ञानस्य तदाऽभावो न भवेत्तु कदाचन ।
न चैवं स्यात्ततोऽन्यद्वा ( स्थानज्ञानस्य ) कथ्यताम् ॥ २७ ॥

कृतमेकेन यत्कर्म तद्विपाकं परः कथम् ।
प्राप्नोति युक्तिदौर्बल्यात्तथापि सुविचार्यताम् ॥ २८ ॥

न कर्मणः फलं कश्चिदशुभस्य शुभस्य वा ।
भुङ्क्तेऽन्योन्यकृतस्यापि युक्तिरेषा गतत्रपा ॥ २९ ॥

केनोक्तं कुशलं कर्म शून्यत्वान्मुनिसत्तम ।
को वात्रात्मोच्यते ज्ञानादुपायाद्वान्यदात्मनः ॥ ३० ॥

स्पष्टानि करणान्यत्र कर्म चात्र परिस्फुटम् ।
एवं करणकर्मभ्यां कर्ता सिद्ध्यत्यसंशयः ॥ ३१ ॥

भूतानामप्यचैतन्यात्प्रवृत्तिर्नेष्यते स्वतः ।
वक्तव्यादानगमनेषूत्सर्गानन्दकर्मणि ॥ ३२ ॥

श्रवणे स्पर्शने रूपे रसे गन्धे च तत्वतः ।
अनेनैवाऽनुमानेन चितिर्ज्ञानक्रियात्मिका ॥ ३३ ॥

लक्ष्यते सा शरीरेऽस्मिन् प्रत्यक्षेणाप्यथोच्यते ।
आशिरोलक्षणे काये येयं संविच्चितेस्सदा ॥ ३४ ॥

आह्लादे वाप्यथोद्वेगे मनस्सङ्कल्पिता सती ।
बुभोज भोक्तृतां पश्चादहं भोक्ता च नान्यथा ॥ ३५ ॥

प्रत्यक्षतोऽथवा सिद्धा या प्रयत्नेन नित्यशः ।
नादात्मकेन भावेन वायुभूतेन लक्ष्यते ॥ ३६ ॥

आधाराधेयसामर्थ्याज्जगत्यास्मिन् महामुने ।

मतङ्गः ।

वायोः प्रवृत्तिरत्राऽपि तच्च भूतमचेतनम् ॥ ३७ ॥

अयस्कान्तेऽपि सामर्थ्याद्दृष्टं यद्भ्रमणादिकम् ।
तस्मादयं न नियमः स्फुटः प्रस्पन्दनात्मकः ॥ ३८ ॥

**परमेश्वरः ।**

वायुः प्रवाहकत्वात्तु सदोपात्तगतिस्स्मृतः ।
निश्चलत्वं हि वैधर्म्यं तच्चैवात्रोभयोरपि ॥ ३९ ॥

यथाऽभिमानिते ह्यात्मा बाह्येप्येवाऽनुमीयते ।
अस्ति धारयिता तस्मात्प्रेरकश्च न संशयः ॥ ४० ॥

अयस्कान्तप्रवृत्तौ च न समाधिः कदाचन ।
तच्चैवापेक्षते नित्यं योक्तारं मुनिपुङ्गव ॥ ४१ ॥

तस्मादात्मास्त्यसन्देहाच्छरीरेऽस्मिन्नचेतने ।
भुङ्क्ते प्राधानिकान् भोगान् सततं कारणे–रणात् ॥ ४२ ॥

**मतङ्गः ।**

भूताणुसङ्घसंयोगाच्छरीरं कारणे–रणात् ।
यदि नाम भवत्येव प्रधानस्य किमागतम् ॥ ४३ ॥

**परमेश्वरः ।**

लीयन्ते यत्र संहारे यतश्चोत्पद्य चात्मनः ।
शरीरघटनारम्भस्तत्प्रधानमिहोच्यते ॥ ४४ ॥

**मतङ्गः ।**

असदुत्पत्तिरुद्दिष्टा सतः प्रख्याप्यते कथम् ।
स्थितस्संस्थाप्यते यस्मात्पर्वतोऽयं महीतले ॥ ४५ ॥

विनष्टं वेष्यते नाथ न्यायेनाऽन्येन शङ्कर ।

परमेश्वरः ।

मृत्पिण्डास्तित्वसामर्थ्यात्घटोऽभिव्यज्यते यथा ॥ ४६ ॥

लोकेप्यर्थक्रियायुक्त उत्पन्नो यत्प्रभाष्यते ।
शाकल्यायामवस्थायां नष्टमित्युपचर्यते ॥ ४७ ॥

न्यग्रोधकर्णिकायां तु यद्वद्वृक्षोऽखिलस्स्थितः ।
तद्वत्प्रधाने तत्वानां लयो ज्ञेयश्च सुव्रत ॥ ४८ ॥

मतङ्गः ।

स्फुटोऽयं नियमो न स्याद्गोश्शृङ्गात्तु शरो यथा ।

ऊर्णाजागोऽविलोमभ्यो गोमयाच्च यथोत्पलम् ॥ ४९ ॥
दृष्टं युक्तिविचारज्ञैर्निस्सन्दिग्धवदीश्वर ।

परमेश्वरः ।

अनेनैवाऽनुमानेन कार्यकारणसन्ततौ ॥ ५० ॥

प्रवक्तव्यं मुनिव्याघ्र धर्मो वैधर्म्यमेव वा ।
न च यन्नास्ति यद्यस्माद्व्यज्यते निश्चिता मतिः ॥ ५१ ॥

अस्तित्वादपि सर्वत्र न समा सूतिरिष्यते ।
यथोषरे तु बीजानामस्तित्वादप्यसम्भवः ॥ ५२ ॥

सामान्यार्थेऽपि नारीणां सूतेर्यद्वशसम्भवः ।
वन्ध्यायां सन्ततौ किं स्याद्विचारोप्युभयात्मनः ॥ ५३ ॥

---

१. दवी पाठभेदः ।

प्रादुर्भवति यद्यस्मात्तदेवात्मानमादरात् ।
साधयेन्मुनिशार्दूल स्थानमप्यविचारतः ॥ ५४ ॥

प्रादुर्भावोऽसतस्सिद्धस्फुटोऽयं निश्चयः कुतः ।
उपलब्धेरभावाद्वा कारणात्प्रत्यवस्थितः ॥ ५५ ॥

अतिसूक्ष्मनिकृष्टत्वाद्वैकल्याद्वाथ चक्षुषः ।
तस्य तस्य तदाभाव एवञ्चेन्मन्यसे यदा ॥ ५६ ॥

तदा तं प्रत्यभावं स्यादन्यत्राऽस्ति यथाऽम्भसः ।
सतस्साधारणस्याऽपि दृष्टं लोके न चाऽन्यथा ॥ ५७ ॥

वैकल्याचक्षुषोसत्तदागमस्याप्यभावतः ।
पिपासार्तस्य चोपायस्स्वयमेवाऽवधारितम् ॥ ५८ ॥

यस्य यस्येन्द्रियस्याऽथ वैकल्यं दृश्यते मुने ।
तस्य तस्य तदाभावो विषयस्य किमागतः ॥ ५९ ॥

ज्ञानचक्षुर्विहीनानां प्रत्यक्षादपरं कुतः ।
कार्यमेतत्प्रधानस्य दृश्यं यत्सचराचरम् ॥ ६० ॥

कार्येण कारणं सिद्धं तच्च भोक्तुरभीप्सितम् ।
भोज्यं भोजयिता देवो भगवान् परमेश्वरः ॥ ६१ ॥

मतङ्गः ।

एवं वदन्ति मुनयो ह्यात्मा शुद्धस्सदैव तु ।
विरागी सिद्धिमुक्तात्मा न च तस्मात्परं क्वचित् ॥ ६२ ॥

प्रधानस्येप्यते सर्गस्स च सर्वत्र संस्थितः ।
न कश्चिद्बध्यते लोके न च कश्चिद्विमुच्यते ॥ ६३ ॥

परमेश्वरः ।

यद्यात्मा केवलस्स्वस्थः प्रधानं चाप्यचेतनम् ।
अनयोर्व्यतिरिक्तत्वादीशस्सोऽप्यत्र नेष्यते ॥ ६४ ॥

सर्गस्याऽपि तदाभावो युक्तितोऽभ्युपगम्यते ।
संयोगश्चेत्तदा रागी साक्षात्सावयवस्स्फुटम् ॥ ६५ ॥

न स्वतश्चाप्यतः पाश्यः प्रधाने नेष्यते जगत् ।
अज्ञत्वं कारणत्वं च पारार्थ्यं चाप्यनर्थिनः ॥ ६६ ॥

प्रतिपत्तिरियं प्रौढी भवतस्सुविचारिता ।
पिपासयोज्झितस्येत्थं यद्यत्राम्भस्स्वयं क्वचित् ॥ ६७ ॥

प्रवृत्तिर्दृश्यते यस्मात्प्रधानस्याऽपि शोभनम् ।
पारार्थ्येनाऽथवा गोश्च क्षीरं तु वत्सवृद्धये ॥ ६८ ॥

गवि तत्राऽस्ति चैतन्यं प्रेरकं पयसो हि तत् ।
वत्सस्याप्यभिलाषित्वं न च तत्पुंप्रधानयेत् ॥ ६९ ॥

मतङ्गः ।

अनादिकालं संरूढाद्वासितात्मा मनस्सदा ।
प्रपञ्चोऽयमविद्याख्यो न पुंसः परिपठ्यते ॥ ७० ॥

परमेश्वरः ।

मनः प्राधानिकं प्रोक्तमचेतनमनातुरम् ।
उच्यते सुखदुःखार्थं वासनाभिरनेकधा ॥ ७१ ॥

यथा यथाश्मलोष्टादौ न भवेत्केन हेतुना ।
आत्मना चोपरक्तस्य मनसश्चेत्प्रवृत्तयः ॥ ७२ ॥

---

१. ष्यचैतन्यादिति पाठभेदः । २. पुम्प्रधानयोरिति पाठभेदः ।

तदा रागी पुमान्न स्यात्प्रधानं वा सचेतनम् ।
मनः प्राधानिकं सिद्धमुपादाननिदर्शनात् ॥ ७३ ॥

मन्यसे स्फटिकोक्त्या वा तच्च तस्य न युज्यते ।
सत्वादन्यः पुमान् सिद्धस्स्फटिकश्चातिसामलः ॥ ७४ ॥

युक्तश्चेदमलस्तस्मान्न वसेदमलीमसे. ।
न च रागविरागाभ्यामुदासीनोऽधिवास्यते ॥ ७५ ॥

विद्याख्यश्चाप्युपायोऽयं योऽविद्यायाः प्रमार्जकः ।
अनेनैवाऽनुमानेन कृतकृत्यस्य कृत्यता ॥ ७६ ॥

न वक्तुं युज्यते यस्मात्तस्माच्छास्त्रमकारणम् ।
वासनाविनिवृत्त्यर्थमुपादेयं महामुने ॥ ७७ ॥

ज्ञानं तस्योपकाराय ततः पुंसां मलस्स्मृतः ।
संसारे युज्यते मुक्तो न च बन्धोऽस्ति मुच्यते ॥ ७८ ॥

ज्ञानेन वासनातोऽयं प्रतिपत्तिर्न शोभना ।

मतङ्गः ।

न्यायेनानेन भवता मलौघोऽतोऽभिधीयते ॥ ७९ ॥

मलः किमात्मकस्तस्य सहजो भाक्त एव वा ।

परमेश्वरः ।

चितेश्चित्सहजो धर्मस्सचाऽनादिमलावृतः ॥ ८० ॥

ताम्रकालिकवद्योगात्सहजस्समुदाहृतः ।

मतङ्गः ।

सहजो यस्य यो भावस्सोऽग्निमारुतयोरिव ॥ ८१ ॥

धर्माभावादधर्मी स्याद्धर्माऽधर्मी कुतोऽपरः ।

**परमेश्वरः ।**

ग्रन्धेर्विषं यथा ताम्रात्कालिका तण्डुलादपि ॥ ८२ ॥

कम्बुकं शक्यते........भावोऽस्ति वस्तुना ।
पशुत्वाऽनादिसम्बन्धात्सति बीजे मलात्मके ॥ ८३ ॥

अज्ञानवासना पुंसो नान्यथा चोपजायते ।

**मतङ्गः ।**

शिवत्वमतिशुद्धं स्यात्पशुत्वमपि सामलम् ॥ ८४ ॥

द्वयोर्विरोधादेकत्वं भगवन् गम्यते कथम् ।

**परमेश्वरः ।**

अनादिकालसंरूढाः पशवः पाशवेष्टिताः ॥ ८५ ॥

विरुद्धमग्निना तोयं युक्तं दहति तत्क्षणात् ।
अस्तित्वान्मुनिशार्दूल विरोधोऽत्र न युज्यते ॥ ८६ ॥

भवताऽपि हि यत्रोक्तमविचार्व्यो मलस्सदा ।
न समानेन धर्मेण चैकः पर्यनुयुज्यते ॥ ८७ ॥

तस्माद्रागी मलोपेतो भोगभुक् पुरुषस्स्मृतः ।
कर्मी च कर्मसामर्थ्याद्यतो भोगेष्वभीप्सितः ॥ ८८ ॥

शिवत्वाद्युज्यते मोक्षे पशुत्वाद्युज्यते तनौ ।
भोगेष्वपि हि सामर्थ्यात्कर्मणा मुनिसत्तम ॥ ८९ ॥

ईश्वराधिष्ठितात्माऽसावस्वतन्त्रो यतस्सदा ।

मतङ्गः ।

स्वभावेनैव जगतः प्रवृत्तिर्दृश्यते यतः ॥ ९० ॥

ततः कर्ता न युक्तस्स्याद्व्यपदेष्टुं सुरेश्वर ।

ईश्वरः ।

स्वभावस्य विपर्यासो भूतनामपि दृश्यते ॥ ९१ ॥

प्रदाहेऽग्नेर्न निर्वाणे यतो वायोर्न संयमे ।
प्रवृत्तिः प्राणिनां सौख्ये न च दुःखे कदाचन ॥ ९२ ॥

कर्मणश्चाप्यचैतन्यात्प्राधान्यं नेष्यते मुने ।
इच्छाविघातिनस्सर्वे न च तृप्ता बुभुक्षवः ॥ ९३ ॥

जगदेतत्सदा यत्तमीश्वरस्य महामुने ।
एवं हि परतन्त्रत्वाज्जगतश्चाऽखिलस्य तु ॥ ९४ ॥

प्रवृत्तिर्नेष्यत्रे यस्मात्तस्मात्कर्ता महेश्वरः ।

मतङ्गः ।

यद्यस्ति भगवानीशः कर्तृत्वे सम्मतस्सदा ॥ ९५ ॥

जगतः परिपूर्णत्वाद्वैचित्र्याच्चाऽपि युज्यते ।
राजद्वेषादिभिर्दोषैस्तस्मादीशोऽसदादिवत् ॥ ९६ ॥

परमेश्वरः ।

वैचित्र्यं जगतः प्रोक्तं स्वकर्मगुणभेदतः ॥
आधाराधेयभावेन विभिन्नमुपचर्यते ॥ ९७ ॥

कर्मकृत्पूरुषः प्रोक्तस्तद्विभागभुगेव सः ।
ईश्वरस्सृष्टिसंहारे रक्षणे च विभुस्स्मृतः ॥ ९८ ॥

निमित्तकारणं त्वीशो ह्युपादानं च शक्तयः ।
समवायि तथा माया कार्यमेतज्जगत्सदा ॥ ९९ ॥

यथाऽर्करश्मयो दीप्ता निरपेक्षास्तपन्ति हि ।
विकासाकुञ्चने दृष्टे कुमुदेष्वम्बुजेषु ते ॥ १०० ॥

शक्तीनां परमेशस्य स्वभावो ह्युपवर्णितः ।
तेनैवाऽवसरप्राप्ते त्वं मुने प्रत्यवस्थितः ॥ १०१ ॥

सति मायात्मके पुंसस्सन्निकृष्टे परे मले ।
स्थूलः प्राधानिको बन्धस्स च कर्मवशात्स्थितः ॥ १०२ ॥

मोहो मदश्च रागश्च विषादश्शोष एव च ।
वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः ॥ १०३ ॥

सत्स्वेतेष्वपि ये पाशा मायातः क्षुरिताः कलाः ।
तदुद्घलितवीर्येण भुङ्क्ते प्रकृतिजान् गुणान् ॥ १०४ ॥

प्रोक्तः पुमानीश्वरचोदितो बलात्
भुङ्क्ते गुणान् कर्मविपाकसम्भवान् ।
तेभ्यो वियोक्ता स शिवो हि शक्तिमान्
मन्त्रैर्महद्भिश्शिवशक्तिसम्भवैः ॥ १०५ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
पुम्प्रधानेश्वरसाधनः पटलस्समाप्तः ।

---

# अथ विद्यातत्त्वपटलप्रारम्भः ।

अथ विद्याऽधिकारोऽयं न्यायप्राप्तोऽत्र वर्ण्यते ।
तस्य पत्युरमोघात्मा शक्तिव्यूहोऽतिरस्कृतः ॥ १ ॥

प्रवृत्तस्सर्वदिक्केन माहात्म्येनातिसर्पिणा ।
तेनोपोद्बलितास्सर्वे शुद्धाध्वभुवनेश्वराः ॥ २ ॥

रुद्राणवो महाभागा मन्त्राणां सप्तकोटयः ।
विवेको यत्सुशुद्धानां मन्त्राणां सर्वतोमुखः ॥ ३ ॥

विवेकात्तत्स्वरूपेण विद्यातत्वमतस्स्मृतम् ।
तस्मिन् यास्संस्थिता विद्याशिवसद्भावविदायिकाः ॥ ४ ॥

नियुक्तास्तु महाभागाः पाशविच्छित्तिकारणम् ।
पशूनां परमेशेन शुद्धसर्गादनन्तरम् ॥ ५ ॥

ततस्ताश्च स्ववीर्येण सर्वदुष्कृतहारिणा ।
आशु संस्पर्शनादेव सृष्टिं कमलजन्मनः ॥ ६ ॥

संहृत्योपरतास्सर्वा विरक्ताश्चातिकिल्बिषात् ।
सर्गात्पैतामहाद्विप्र जन्ममृत्युभयावहात् ॥ ७ ॥

ततोऽधिकारं निर्वर्त्य स्वभावेनैव ताः कलाः ।
प्रतिसञ्चरमापन्नास्तत्तेजः पारमेश्वरम् ॥ ८ ॥

विवेष्टुमुद्यतास्सत्यः कारणेन महात्मना ।
धारिता विनियोगार्थमनन्तेन शिवेरणात् ॥ ९ ॥

---

१. स्ताश्च ।

ततस्ताः प्रष्टुमारब्धाः कारणं मन्त्रनायकम् ।
भगवन् यस्त्वया मह्यमधिकारोऽतिदुष्करः ॥ १० ॥

प्रागुक्तस्स समस्तोऽयं सम्यक् निर्वर्तितोऽधुना ।
गच्छामस्स्वोचितं स्थानं किमर्थं विनिवार्यसे ॥ ११ ॥

ततोऽनन्तेन ताः प्रीत्या विद्या वेदार्थदायिकाः ।
भवत्यस्स्वोचितं स्थानं प्रयान्त्वर्थेन शोभनाः ॥ १२ ॥

मत्प्रीत्या विनियोगार्थं धार्यतामेकवासरम् ।
ततस्स्वाचारवर्तिन्यो भर्तुराज्ञाऽनुपालिकाः ॥ १३ ॥

स्थितास्त्वर्धेन सेनाया गताश्शिष्टाः परस्परम् ।
सम्प्रधार्य महावीर्या भर्तुश्शासनतत्पराः ॥ १४ ॥

तासां भुवनविन्यासं कृतवान् परमेश्वरः ।
नानारत्नविचित्राणि दिव्याचारगुणानि तु ॥ १५ ॥

भुवनानां सहस्राणि मन्त्राणाममितौजसाम् ।
विद्यानामधिपश्श्रीमान् यत्राऽसौ मन्त्रनायकः ॥ १६ ॥

स्थितवान् स्वेन वीर्येण शिरश्चाऽमिततेजसः ।
दिव्यं ब्रह्मशिरो नाम्ना रुद्राणी च यशस्विनी ॥ १७ ॥

पुरुष्टुतश्च दीप्तात्मा रक्षाकर्मणि पाटलः ।
अस्त्रमप्यथ तेजाढ्यं यत्तत्पाशुपतं महत् ॥ १८ ॥

च्छेदने भेदने दाहे रक्षणे च सुपेशलम् ।
विद्या भानुमती नाम भाभिरप्रतिमा तु सा ॥ १९ ॥

ततोऽन्याऽपि महाभागा रौद्री रौद्रेण कर्मणा ।
विश्वा च काळी कापाली विद्याऽन्याऽपि महोदया ॥ २० ॥

सुखोदयाऽन्या विख्याता तथा वज्रीति कीर्तिता ।
अष्टावेता यशस्विन्यो विद्येशानां महात्मनाम् ॥ २१ ॥

क्रीडनार्थं विलासिन्यः पशूनां पाशमोचिकाः ।
अघोरो घोरनामा च तथा घोरतरोऽपरः ॥ २२ ॥

अघोरश्चातिघोरश्च सुघोरश्चातिवीर्यवान् ।
महाघोरो विघोरश्च रुद्रास्त्वेते महाबलाः ॥ २३ ॥

शिवस्याङ्गानि सान्तानि सन्निकृष्टानि नित्यशः ।
ब्रह्माणी चैव नाथस्य यैर्निबद्धा तनुश्शिवा ॥ २४ ॥

तान्यत्रापररूपेण नियुक्तानि महात्मना ।
ब्रह्माण्यङ्गानि यानि स्युस्तानि सादाख्यगोचरे ॥ २५ ॥

तथाप्यनुग्रहार्थन्तु तत्वे विद्याह्वये मुने ।
द्रष्टव्यान्यधिकारेण तेषां नामान्यमूनि तु ॥ २६ ॥

सर्वात्मा हृदयं मुख्यं सुशिवाख्यं शिरः प्रभोः ।
ज्वालिनीति शिखा ज्ञेया कवचं पिङ्गलं महत् ॥ २७ ॥

शिवास्त्रं च महादीप्तमग्निं ज्वालातुरं परम् ।
एते मन्त्रास्समाख्याताः प्राधान्येन शिवात्मकाः ॥ २८ ॥

ईशानः प्रथमं ब्रह्म ततस्तत्पुरुषात्मकम् ।
तृतीयमप्यघोराख्यं वामदेवात्मकं ततः ॥ २९ ॥

पञ्चमं सत्यमित्युक्तं ब्रह्म सर्वार्थसाधकम् ।
प्राधान्येन स्थिता ह्येता विद्या मन्त्राश्च सुव्रत ॥ ३० ॥

एकाशीतिपदा देवी या सा शक्तिश्शिवात्मिका ।
शान्तौ विनिर्गता पूर्वं स्थानं तस्यास्तदात्मकम् ॥ ३१ ॥

लये च शिवतत्त्वाख्यं व्यक्तौ बिन्द्वात्मकं परम् ।
भोगस्सदाशिवस्थाने ईश्वराख्ये च शासनम् ॥ ३२ ॥

विद्यातत्त्वेऽधिकारस्स्याद्योनिर्ज्ञेया सदैव हि ।
अस्यामेव स्थिता मन्त्रा विद्याश्च विविधा मुने ॥ ३३ ॥

इयं तावन्महाशक्तिश्शिवस्य परमात्मनः ।
एवमुक्ते तथार्थेऽस्मिन् मतङ्गः प्रष्टवान् मुनिः ॥ ३४ ॥

तत्वधर्मेण विद्याख्यं विद्यानां सन्निवेशतः ।
प्रसिद्धं सर्वतन्त्रेषु विशेषेण निगद्यताम् ॥ ३५ ॥

ततः प्रोवाच भगवान् त्र्यम्बकः पार्वतीपतिः ।
विद्यावेदनशीलत्वात्सामान्येयं न जातुचित् ॥ ३६ ॥

सामान्याऽपि प्रवक्तव्या वेद्यार्थप्रतिपादिका ।
शुद्धेऽध्वनि विवेको यस्साधकानां महात्मनाम् ॥ ३७ ॥

निर्विकल्पशिवत्वे तु सधर्मस्तात्त्विको मतः ।
न केवलं तत्वधर्मो मन्त्राणाममितौजसाम् ॥ ३८ ॥

भुक्तिमुक्तिप्रदा मन्त्रास्त्वर्चितास्सम्यगध्वरे ।
जप्ताश्च विधिवद्विप्र कामभेदेन साधकैः ॥ ३९ ॥

ददात्यभिमतान् भोगान् नात्र कार्या विचारणा ।

मतङ्गः ।

मन्त्रो नाम जगन्नाथ वर्णानां रचना स्फुटम् ॥ ४० ॥

स च शब्द इति ख्यातो विषयो बन्धकारणम् ।
इन्द्रियं च तमेवाहुर्मुनयश्शास्त्रवित्तमाः ॥ ४१ ॥

तेन यस्साध्यते मोक्षस्स मोक्षः कीदृशो भवेत् ।

परमेश्वरः ।

वाच्यवाचकभेदोऽयं सुप्रसिद्धो महामुने ॥ ४२ ॥

मोक्षार्थं सुनियुक्तानां वाच्यानां कारणेच्छया ।
नियुक्ता वाचकत्वेन वर्णाश्शास्त्रे शिवोदये ॥ ४३ ॥

अस्वतन्त्रं जगद्यस्मात्स्वतन्त्रः परमेश्वरः ।
तदीरिता साधकानां नित्यं सन्निहिता गिरि ॥ ४४ ॥

इन्द्रियाणामचैतन्याद्वर्णानामप्यमूर्तता ।
मनोश्च परतन्त्रत्वात्साधकस्याप्यशासने ॥ ४५ ॥

शक्त्यावेशात्ततस्सिद्धा वाचि सान्निध्यता मनोः ।

मतङ्गः ।

वाच्यस्य वस्तुनो यस्माद्वाचि सान्निध्यता भवेत् ॥ ४६ ॥

खड्गोच्चारेण जिह्वायाश्छेदः केन निवार्यते ।

परमेश्वरः ।

यस्य यत्राऽधिकारोऽस्ति चेतनस्य महामुने ॥ ४७ ॥

लोकेऽपि यो यदायत्तो यन्मात्रेण स तत्र वै ।
आशु सान्निध्यतामेति निश्चितेयम्मतिस्सदा ॥ ४८ ॥

वागिन्द्रियेऽधिकारोऽस्मिन् वर्णानां दृश्यते यतः ।
वर्णोपोद्बलिनी शक्तिश्शक्त्याधाराश्च देवताः ॥ ४९ ॥

तस्मात्सन्निहिताश्चापि (समाधान) बलान्विताः ।
यत्र यत्र नियुज्यन्ते तत्र तत्र फलप्रदाः ॥ ५० ॥

बाह्येष्वपि हि लक्ष्येषु गन्धधूपस्रगादिभिः ।
आराध्यमाना विधिवद्यथेप्सितफलप्रदाः ॥ ५१ ॥

नित्यं शब्दात्मका मन्त्रा विलयोत्पत्तिधर्मिणः ।
ईश्वराधिष्ठितास्सन्तो न च स्वेच्छाविधायिनः ॥ ५२ ॥

येषां स्वभावतस्सिद्धो नित्यश्शब्दोऽप्रयत्नतः ।
कर्तृत्वेनेश्वरस्सिद्धो युक्तिस्तेषां न युज्यते ॥ ५३ ॥

यस्मादचेतनश्शब्दस्ताल्वोष्ठपुटयोगतः ।
व्यज्यते नान्यथा कर्तुरभावान्मुनिसत्तम ॥ ५४ ॥

मतङ्गः ।

मन्त्रातीतो हि भगवान्निर्विकल्पश्शिवोऽव्ययः ।
मन्त्रैश्च क्रियते दीक्षा प्रपञ्चेऽस्मिन् सनातने ॥ ५५ ॥

पुंसो योजयितुं मन्त्राः कथं शक्ताः शिवे पदे ।

परमेश्वरः ।

व्यापारोऽध्वनि मन्त्राणामखिलेऽस्मिन्महेश्वरात् ॥ ५६ ॥

प्राप्तोऽखिलोऽखिलैर्मन्त्रैरध्वा बन्धस्य कारणम् ।
तस्मिंच्छुद्धे विशुद्धास्ते शेषं वस्तु सुनिर्मलम् ॥ ५७ ॥

न मन्त्रैः कारणे तत्र व्यक्तिं निर्वाति सर्वतः ।
कालिकाहरणे यद्वत्कारणं सर्वदा रसः ॥ ५८ ॥

न स्यात्काञ्चनदाने तु स तथाऽप्युपचर्यते ।

मतङ्गः ।

अध्वपाशनिबद्धानां शरीराणां महेश्वर ॥ ५९ ॥

तद्विशुद्धेपिनाभावस्समाधिर्जायते कथम् ।

परमेश्वरः ।

प्राक्संस्कारवशाद्यद्वच्चक्रं निर्वर्ततेऽपि हि ॥ ६० ॥

घटे तद्वत्भ्रमत्यन्तश्शरीरं ध्रियते मुने ।
लोकेऽपि सुप्रतीतं स्याद्द्विविधं कर्म कर्मिणाम् ॥ ६१

क्रियावसानिकं दृष्टमदृष्टं तत्र संक्षये ।
न चेदेवं तदा भावश्शास्त्रस्य सह कर्मणा ॥ ६२ ॥

मतङ्गः ।

धर्माऽधर्मात्मकं कर्म तच्च बन्धस्य कारणम् ।
मुक्तिस्तेनैव शास्त्रेऽस्मिंस्तत्कथं गम्यते विभो ॥ ६३ ॥

परमेश्वरः ।

नाकर्मतः फलावाप्तिरशुभस्य शुभस्य वा ।
शुभाच्च यद्भवेन्मोक्षः कर्मणः प्रतिपद्यते ॥ ६४ ॥

शत्रुभिर्बध्यते यद्वत्कर्मभिर्निगळादिना ।
तद्वदेव कर्मात्सद्भिः कर्मणैव विमुच्यते ॥ ६५ ॥

सम्बोधादपि यत्रोक्तो वाग्व्यापाराद्गरीयसः ।
क्लेशेन चाववोधस्स्यान्न स्याद्वा तच्च दुष्करम् ॥ ६६ ॥

यदुत्तरमतीतस्य कर्मणस्ताद्विभेदतः ।
दृश्यते च किमाश्चर्यं तत्कर्म बलवत्तरम् ॥ ६७ ॥

यस्मादमूर्तं सापेक्षमस्वतन्त्रमचेतनम् ।

**मतङ्गः**

प्रध्वंसि प्राक्तनं कर्म बलवच्च यदुत्तरम् ॥ ६८ ॥

तद्विपाकभुजां योगो मोक्षः कुत्र समागतः ।

**परमेश्वरः**

मन्त्राः कृत्स्नस्य बन्धस्य भोक्तारः पत्युरिच्छया ॥ ६९ ॥

मायोत्थस्याऽपि कुशलाः किं पुनः कर्मसन्ततौ ।
सापेक्षास्सिद्धयोऽस्माकं निरपेक्षाविमुक्तये ॥ ७० ॥

तद्विपाको विरक्तस्य नोपसर्पति कर्हिचित् ।
रागिणस्साधकस्येत्थमुपभोगाय सर्पते ॥ ७१ ॥

मन्त्रशक्तिरमोघा स्याद्विकल्पविषयोत्थिता ।
वृश्चिकाद्यापवर्गान्ते कर्मण्यत्र स्वके स्वके ॥ ७२ ॥

---

१. पुमान् इति पाठभेदः ।   २. यस्मात् इति पाठभेदः ।

नियुक्ताः परमेशेन न मीमांस्याः कथञ्चन ।
यस्मादचिन्त्यफलदाः प्रत्यक्षेणाऽपि संस्फुटाः ॥ ७३ ॥

तस्मान्मन्त्रक्रिया मुख्या सेश्वरी भुक्तिमुक्तिदा ।
यस्मादचेतनाऽमूर्ता निर्दया निरहङ्कृता ॥ ७४ ॥

येषामनीश्वरी तेषां फलदानं प्रमीयते ।
वणिक्कृष्यादयोऽप्यत्र किञ्चिदाश्रित्य कारणम् ॥ ७५ ॥

प्रपद्यन्तेऽन्यथा हानिः प्राक्तनस्याऽपि जायते ।
लोष्टादिकल्पितैरीशैस्सम्यगाराधनक्रिया ॥ ७६ ॥

सफला दृश्यते यस्मात्तस्मादीशात्फलं ध्रुवम् ।

विद्यात्मकं तत्वमुदारवृत्तं
समासतस्ते निखिलं मयोक्तम् ।
मायात्मकस्याऽवसरागतस्य
स्वरूपमेतद्विधिनाऽधुनोच्यते ॥ ७७ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
विद्यातत्वपटलस्सप्तमस्समाप्तः ।

---

## अथ मायापटलप्रारम्भः ।

अथ मायात्मकं चक्रमुदीर्णममितात्मकम् ।
वर्णयिष्यामि संक्षेपाद्यथावत्सुविचारितम् ॥ १ ॥

यत्कर्मणोऽपि पक्वस्य कर्मिणश्चाऽभिलाषिणः ।
भोक्तुमप्युद्यतस्येह शरीरोत्पत्तिकारणम् ॥ २ ॥

ततस्त्वनादिमध्यान्तं स्ववृत्तिगुणसङ्कुलम् ।
स्फुटमत्यन्तगहनं व्यक्तं कर्तुस्समीरणात् ॥ ३ ॥

सूक्ष्मं सर्वगतं नित्यमत्यद्भुतगुणावहम् ।
चैतन्यनिलयं विश्वमचेतनमरूपकम् ॥ ४ ॥

रूपं चैतन्यवत्प्रोक्तमुपचारवशात्स्थितम् ।
नान्यथा शक्यते वक्तुं मायातत्वमिदं यतः ॥ ५ ॥

यद्वा मायात्मकं लोके वस्तुरूपं सकुत्सितम् ।
नादृष्टं शक्यते वक्तुमदृष्टं शक्रजालवत् ॥ ६ ॥

तस्माद्दृष्टास्य सर्वस्य चैक एव जगत्पतिः ।
न चान्यैश्शक्यते द्रष्टुं हेतुजालशतैरपि ॥ ७ ॥

तद्वक्राम्बुजनिष्क्रान्तैर्ज्ञानोद्गारमरीचिभिः ।
जगत्प्रदीपकैश्शुद्धैस्तत्प्रसादात्प्रसर्पिभिः ॥ ८ ॥

बुद्धावधिष्ठितैर्विप्र दृश्यते नान्यथा क्वचित् ।

मतङ्गः ।

मायेयं भवता युक्त्या स्वकार्यगुणविस्तरात् ॥ ९ ॥

वक्तव्या स्वेन रूपेण तच्च रूपमनिश्चितम् ।
मायेयं शक्रजालं स्यान्न च प्राप्ताक्षगोचरम् ॥ १० ॥

परमेश्वरः ।

प्राकृतैरिन्द्रियैर्विप्र प्रकृतेरप्यनात्मकम् ।
नोपलब्धमिदं रूपं यत्तत्सूक्ष्मगुणात्तकम् ॥ ११ ॥

अस्यास्सूक्ष्मतराऽदूरा माया केनोपलभ्यते ।
तथापि युक्तितो वाच्या श्रुणुष्वैकमना मुने ॥ १२ ॥

अणोर्मलः प्रधानाख्यो विभूत्यै स्थूलतां गतः ।
बहिरङ्गोपचारेण पञ्चधा संस्थितः पुनः ॥ १३ ॥

योयं भूतात्मको वर्गस्स्थूलस्स परिविस्तरः ।
तस्मात्सूक्ष्मतरो वर्गः प्रोक्तस्तन्मात्रसंज्ञकः ॥ १४ ॥

पश्चाद्धटमयोऽन्योऽपि वर्गः कर्मेन्द्रियाह्वयः ।
बुद्धीन्द्रियात्मकस्तस्माद्वर्गस्सूक्ष्मोऽथ पञ्चमः ॥ १५ ॥

त्रिधान्तःकरणं चान्यो वर्गश्शास्त्रे शिवोदये ।
इदं तावच्छरीरं स्याद्गौणं भोक्तुश्शरीरिणः ॥ १६ ॥

भोक्तृत्वाल्लक्ष्यते माया चितेरासन्नगोचरा ।
षोढा व्यवस्थितेनेयं स्वेन रूपेण सर्पिता ॥ १७ ॥

रूपैर्नियामिका भोक्तुर्मलोपेतस्य सुव्रत ।
सुसत्यामाश्रये यद्वत्क्षीरं दोषविवृद्धये ॥ १८ ॥

दीप्ताग्नेर्न तथा यस्मात्तस्मादत्राऽपि निश्चितः ।
पुंसोऽपि लक्ष्यते दोषस्सहजस्स्वगुणात्मकः ॥ १९ ॥

तत्तिरस्कारवशगो कर्मयुग्भोगतत्परः ।
ततः प्राधानिकैस्स्थूलैर्गौणैस्स परिभूयते ॥ २० ॥

---

१. नः इति पाठभेदः ।

**मतङ्गः ।**

अणुश्चिच्छक्तिमांश्चैतान्मलान् सूक्ष्मतरस्स्थितः ।
मलप्रध्वस्तचैतन्योऽबलस्स्वातन्त्र्यवर्जितः ॥ २१ ॥

तिरस्कर्ता मलः प्रोक्तो न्यायेनाऽनेन नेष्यते ।
ततः प्रोवाच विश्वात्मा यद्वत्पुंश्चेतनः क्षितौ ॥ २२ ॥

वारुण्यात्मवशीकृत्य धृष्यतेऽविकलेन्द्रियः ।
मुनिः प्रोवाच भगवन् भूतपिण्डमचेतनम् ॥ २३ ॥

तन्मध्यवशगं दृष्टं चैतन्यस्य किमागतम् ।

**परमेश्वरः ।**

अचेतने स्थितः पात्रे सुचिरं वेगवानपि ॥ २४ ॥

न पात्रस्य विकारस्स्यान्मन्यसे केन हेतुना ।
भोगात्मा चेतनस्सिद्धस्तन्निषङ्गेण चेतनम् ॥ २५ ॥

पिण्डमन्त्रोदितं तस्माद्विशेषाद्धर्षणादिभिः ।
ग्लानोत्कृष्टवपुष्मत्या छाययैवोपलक्ष्यते ॥ २६ ॥

नेत्रादिभिर्विकारैश्च रक्षन्नपि विचक्षणैः ।
लक्ष्यते कारणं कर्तुर्बाह्यैरभ्यन्तराश्रितम् ॥ २७ ॥

एवं विकारैस्सहजैस्सुखदुःखोपसर्पिभिः ।
समलोणुः किमाश्चर्यं वासितोऽनादिकर्मणा ॥ २८ ॥

तद्विपाकाभिलाषित्वान्नेच्छन्नापि प्रयाति हि ।
तस्मिन्मायात्मके ग्रन्थौ सुसूक्ष्मोऽतितिरस्कृतः ॥ २९ ॥

---

१. न्यस्थूल इति पाठभेदः ।

पतिशक्त्युद्धृतो भोगात्सुषुप्त इव लक्ष्यते ।
न विजानाति शब्दादीन्नात्मानं न च कारणम् ॥ ३० ॥

स्थानं च [1]लब्धवृत्तित्वाद्यावत्कालमहर्मुखम् ।

मतङ्गः ।

मलोणोस्सप्तधा पूर्वं भवता सूचितो मम ॥ ३१ ॥

यथावत्तं स्वरूपेण भगवन् वक्तुमर्हसि ।

परमेश्वरः ।

मोहो नाम मलः पुंसस्सहजोऽनादिमानिति ॥ ३२ ॥

योनिषण्णाम्मदादीनां प्रधानत्वाद्द्विजोत्तम ।
सति मोहे प्रकृष्टेणुर्मायातः पातिशक्तिभिः ॥ ३३ ॥

मोहशक्तिनिरुद्धात्मा मुह्यत्यात्मार्थ एव हि ।
धर्मेप्यधिवसेन्मोहाद्विपरीतेषु भावितः ॥ ३४ ॥

असत्कर्मण्यनायासात्सद्बुद्ध्या सम्प्रवर्तते ।
विण्मूत्ररुधिरक्लिन्नां त्वगस्थिशकलीकृताम् ॥ ३५ ॥

भुक्तामपि स्त्रियं प्रीत्या तान्येवाङ्गानि सुव्रत ।
जुगुप्सितव[2]द्युक्तात्मा क्षणादन्यां सुशोभनाम् ॥ ३६ ॥

दृष्ट्वा मोहमदाविष्टो बाह्यावयवशोभया ।
अकृष्यामाणो मूढात्मा साभिमानो विभावितः ॥ ३७ ॥

शिरच्छेदात्परं दुःखं तद्वियोगात्प्रपद्यते ।
अस्मान्मोहवशात्क्षिप्रं मदेनैवाऽभिभूयते ॥ ३८ ॥

---

१. लुप्तवृत्तित्वादिति पाठभेदः । २. जुगुप्सते विरक्तोऽत्रेति पाठभेदः ।

निर्भर्त्स्यमानोऽपि तदा ताड्यमानश्च भूरिशः ।
अधीकृतो मदेनाशु विरूपामपि रूपिणीम् ॥ ३९ ॥

मन्येताभ्यो परा भद्रा स्वर्गेप्यस्ति यशस्विनी ।
ततोभिभूयते गाढं रागेणाऽपि बलीयसा ॥ ४० ॥

नियम्यते यथा पङ्कस्सकषाये तु वाससी ।
तच्च जह्यात्क्षणं रागान्न च तृप्तिं प्रयाति हि ॥ ४१ ॥

क्षीणशक्तिर्यदा पश्चात्क्षीणद्रव्योऽथ मानवः ।
तदा विषयमाविश्य विषण्णवदनस्सदा ॥ ४२ ॥

स्वसूतौ स्नेहमाविश्य विषादमलपीडितः ।
त्यक्तुं नोत्सहते चित्तमियमेवाहमात्मनः ॥ ४३ ॥

पश्यन्विषीदते पश्चाद्विषादेनाकुलीकृतः ।
विषादे च भवेच्छोषो मलश्चाणोस्सुदुस्तरः ॥ ४४ ॥

शुष्यमाणस्य वैचित्र्यं महत्पापं न संशयः ।
(वियुज्यामो)ऽधुना येन बन्धुवर्गान्सुलालितान् ॥ ४५ ॥

कस्त्रातास्य कुटुम्बस्य गते वै पञ्चतां मयि ।
एवं सञ्चिन्त्य सञ्चिन्त्य वैचित्र्याकुलितेक्षणाः ॥ ४६ ॥

कृतकृत्योऽहमथवा पुत्रपौत्रस्नुषादिभिः ।
किमद्याऽपि मया कार्यं हृष्टिमायान्ति तत्क्षणात् ॥ ४७ ॥

---

१. मन्वानोऽस्याः परा इति पाठभेदः । २. विषादमिति पाठभेदः ।

विधातुस्सर्वजगतस्स्थापितोऽथमनुक्रमात् ।
एवं सञ्चिन्त्यमानोऽपि चिनोति च पुनः पुनः ॥ ४८ ॥

एवं दृष्ट्वा तु विभवमात्मीयं हृष्यते मुहुः ।
यद्यप्यन्ते मया प्रोक्तो मलोयं हर्षणात्मकः ॥ ४९ ॥

तथाऽपि व्यापकत्वेन द्रष्टव्यो मुनिपुङ्गव ।
यतो दुःखावसानेषु हृष्टिस्सर्वत्र दृश्यते ॥ ५० ॥

लाभे चेप्सितवस्तूनामिष्टस्याऽपि समागमे ।
सत्स्वेतेषु पशोर्भोगो मायातः क्षुरितस्सदा ॥ ५१ ॥

नान्यथा प्राक्तनान्भोगान्भोक्तुं शक्नोति पुद्गलः ।
एवंविधैरसङ्ख्यातैरणुभिः परिपूरिता ॥ ५२ ॥

माया मायाविनी यस्माज्जगतः परिकीर्तिता ।
जगच्चराचरं सैव विधात्रा क्षोभिता सती ॥ ५३ ॥

तद्वासनाभिस्सूक्ष्माभिर्बहुकालाऽनुसारिभिः ।
प्रवास्यन्तेऽणवस्सूक्ष्माः पाशानां वशवर्तिनः ॥ ५४ ॥

पश्चात्कलादिभिस्स्थूलैर्बध्यन्तेऽध्वनि संस्थिताम् ।
प्रधानमपि मायोत्थं कलातस्स्थूलतां गतम् ॥ ५५ ॥

तस्य यास्सूतयः पुंसस्सम्बन्धोऽतिगरीयसः ।
पुंबन्धो जगतः कृत्स्नो मायोत्थः परिभाष्यते ॥ ५६ ॥

हारिणी या शिवस्योक्ता तयात्मनि वशीकृता[1] ।
प्रवर्तते तु संहारे मायाऽणूनां महामुने ॥ ५७ ॥

---

१. तयात्मनि परीकृत इति पाठभेदः ।

**मतङ्गः ।**

स्वभावो रश्मयः पत्युर्ग्रन्थेरपि तदीरणात् ।
व्यक्तये जगतास्सिद्धास्संहारः केन हेतुना ॥ ५८ ॥

सङ्कोचश्चेत्तदायायत्तस्त ते रश्मयः पते ।
यूयं सङ्कोचधर्मिण्यो न च सर्वगतः प्रभुः ॥ ५९ ॥

व्यक्तये नो भवेन्नाशे कुलालस्य यथा तथा ।

**परमेश्वरः ।**

कर्तृत्वमीप्संसे सृष्टेश्शक्तिभिः परमेष्ठिनः ॥ ६० ॥

संहारे नेप्सितः कस्माद्यथा भानोर्गभस्तिभिः ।
अम्भसस्सृष्टिसंहारे न कुलालनिदर्शनात् ॥ ६१ ॥

कृतकस्य विनाशोऽस्ति सर्वत्रैव न च स्वयम् ।
नानिमित्तोऽथवाऽकर्ता निमित्तं शक्तिपूर्वकम् ॥ ६२ ॥

शक्तयश्चात्र संपूर्णास्स्वव्यापारसुपेशलाः ।
अव्याहतगुणाकीर्णा यस्यासौ परमेश्वरः ॥ ६३ ॥

स्वतन्त्रस्सर्वकर्तृत्वे तस्य किं प्रविचार्यते ।
मायाऽपि तद्वशा यस्मान्नित्यं प्रसवधर्मिणी ॥ ६४ ॥

मधुकोशपुटाकारा निचिता परमाणुभिः ।
कृष्णाम्बुमुञ्चिते व्योम्नि मायाख्ये शिवशक्तयः ॥ ६५ ॥

विभान्ति कारणत्वेन रात्राविव तटिल्लताः ।
रुद्राश्च भुवनाधाराः वृता रुद्रैस्सहस्रधा ॥ ६६ ॥

---

१. मिप्यते इति पाठभेदः । २. नेष्यते इति पाठभेदः ।

ग्रन्थेरूर्ध्वं कपालानि षट् सङ्ख्यातानि सुव्रत ।
तावन्त्यधस्ताद्दिव्यानि रचितानि च धातुभिः ॥ ६७ ॥

नानारत्नविचित्राणि ह्येतावन्त्यधुनोच्यते ।
विभागो भुवनेशानां क्रीडाभूमिस्थितात्मनाम् ॥ ६८ ॥

भुवनानामियम्माला मायान्तर्वर्तिनी शुभा ।
रुद्राणाङ्कार्यकरणात् ब्रह्माख्यमतिनिर्मलम् ॥ ६९ ॥

अन्योन्यापेक्षया संस्थं क्रमशो गुणवत्तरम् ।
स्वेन स्वेन तु वीर्येण रुद्रा भोगभुजश्शिवाः ॥ ७० ॥

विशुद्धकारणत्वेन मायाशनविवर्जिताः ।
भुवनेषु विचित्रेषु क्रीडन्त्यमिततेजसः ॥ ७१ ॥

ऐश्वर्यमदमाविश्य मन्यमाना महोदयाः ।
मत्तश्श्रेष्ठतरं नान्यत्कारणं जगतः परम् ॥ ७२ ॥

अहमेव समस्तस्य जगतोऽस्य जगत्पतिः ।
तस्मादधस्स्थितस्यापि गर्वोऽयं नात्र संशयः ॥ ७३ ॥

नियुक्ताः कारणेनैते रुद्रा भुतनपालकाः ।
कर्तारोऽधिकवीर्यास्तु प्रबुद्धाश्शुद्धवृत्तयः ॥ ७४ ॥

कारणं स्वं न जानन्ति भगवन् केन हेतुना ।

**परमेश्वरः ।**

यतो ययृषयस्सर्वे स्वसृष्टिमदमोहिताः ॥ ७५ ॥

तस्मिन्नभिरतास्सन्तः क्रीडाभोगेष्वनिन्दिताः ।
स्वकारणकरैस्सम्यक् संहारे स्वापमाप्नुयुः ॥ ७६ ॥

---

१. श इति पाठभेदः ।

ततः क्षोभिकयाविष्टास्सम्प्रबुद्धाः परस्परम् ।
तद्विधमेव पश्यन्ति स्वां सृष्टिरचनोज्वलाम् ॥ ७७ ॥

सुप्त्वोत्थिता वयं किन्तु स्वनिद्रावशवर्तिनः ।
क्रीडामो विगतक्लेशाः स्वार्जितेषु बुभुक्षवः ॥ ७८ ॥

सूक्ष्मपाशावृतास्सर्वे न च स्थूलैस्तिरस्कृताः ।
अनन्तोऽनन्तवीर्यात्मा सर्वेषाम्मूर्धनि स्थितः ॥ ७९ ॥

ततोऽधस्ताच्छिवो नाम्ना रुद्रो भुवनभृत्प्रभुः ।
विश्वेशश्च महातेजा विघ्नेशानोपरस्ततः ॥ ८० ॥

ततोऽन्यो ब्रह्मणस्स्वामी क्षोभीशश्चाप्यनन्तरम् ।
एते षट् भुवनेशानाः स्वतेजोद्भूतवृत्तयः ॥ ८१ ॥

मायानिशीथतमसि निष्कम्पाश्च सुनिर्मलाः ।
द्योतयन्तो जगत्सर्वं प्रविभान्ति महेश्वराः ॥ ८२ ॥

एभ्यो यस्संस्थितो ग्रन्थिर्दुर्भेद्यश्चातिविस्तृतः ।
यत्राऽसौ विग्रहेशानस्स्थितः परमदुर्जयः ॥ ८३ ॥

वृतो रुद्रो महाभोगैस्स्वशक्तिबलशालिभिः ।
भुवनं भुवनेशस्य विनोदशतसङ्कुलम् ॥ ८४ ॥

यत्र शर्वो भवश्चैव ह्युग्रो भीमश्च वीर्यवान् ।
भस्मान्तको दुन्दुभिश्च श्रीवत्सश्च महाबलः ॥ ८५ ॥

अस्माद्ग्रन्थेरधश्चक्रं षट्कपालमयं महत् ।
चितं भुवनमालाभिर्भोगौत्सुक्यपरिष्कृतम् ॥ ८६ ॥

गोपतेर्भुवनं दिव्यं त्रिकलस्याप्यनन्तरम् ।
तदधस्ताद्दशेशस्य भुवनं चारु निर्मलम् ॥ ८७ ॥

हरेर्हरस्य देवस्य तथा हरिहरस्य च ।
भुननानामियं माला चतुर्थभुवनाश्रिता ॥ ८८ ॥

असाध्यस्य ततोऽधस्ताद्भुवनं रुद्रसेवितम् ।
यत्तदत्यन्तगहनं गहनेशस्य धीमतः ॥ ८९ ॥

पुद्गलानां लयो यत्र प्रधानस्य च सुव्रत ।
तत्रासौ भुवनेशानो भुवनेशैर्महाबलैः ॥ ९० ॥

वृतो विराजते तत्वे मायाख्येऽतीव गह्वरे ।
कालानलान्तमध्वानं येनात्तं स्वेन तेजसा ॥ ९१ ॥

भुवनानि दश द्वे च यान्यशुद्धे तु वर्त्मनि ।
एभ्योऽन्यद्भुवनं नास्ति मायोत्थं मुनिसत्तम ॥ ९२ ॥

शक्तिसम्मूर्च्छितात्मानो लुप्तव्यापारवृत्तयः ।
यत्राणवः प्रलीयन्ते तदिदं गहनाह्वयम् ॥ ९३ ॥

मायामन्त्रेश्वरस्यैषा क्रीडनाय विसर्पिता ।
नानारूपधरा विश्वा विश्वस्य जगतोरणिः ॥ ९४ ॥

यादृक्कर्मविपाकस्य भोक्तुस्स्थानविभूतये ।
तदात्मकेन रूपेण तादृक्तं प्रति पेशला ॥ ९५ ॥

मतङ्गः ।

भोक्तुश्शरीरमत्रोक्तं स्थानभूत्यै महेश्वर ।
कर्मणावस्थितस्येत्थमशुभेन शुभेन वा ॥ ९६ ॥

किमर्थं सुखदुःखाभ्यां बाध्यते तत्र संस्थितः ।
एकस्यामेव मे भ्रान्तिः च्छिन्धि शास्त्रार्णवोदरे ॥ ९७ ॥

परमेश्वरः ।

जगतस्सुप्रसिद्धे द्वे धर्माधर्मौ तु कर्मणी ।
अनादिकालसंरूढे ताभ्यां पुंवासितास्सदा ॥ ९८ ॥

यद्येकेन विपाकेन शरीरं भोगिनस्स्थितम् ।
तदा कार्यस्य नारम्भः कर्मणो वाथ जायते ॥ ९९ ॥

जात्युत्कटेन तज्जातेः कर्मणो देहसम्भवः ।
प्राक्सञ्चितसमूहस्य वासनाख्यस्य कर्मणः ॥ १०० ॥

यत्कर्मसहकारि स्याद्यस्य यस्य तदात्मकम् ।
तेनोपबृंहितं भूत्यै भोक्तुर्व्यक्तिमुपैति हि ॥ १०१ ॥

कर्म न्यक्भूतमपरं यदवष्टम्भकं गुरु ।
तेनातिगुरुणा पूर्वं शुभेनाऽप्यशुभेन वा ॥ १०२ ॥

व्यक्तीभूते न भुक्ते च ततोऽन्यदुपसर्पति ।
क्षिप्रं बलवता वापि तीव्रेणातिगरीयसा ॥ १०३ ॥

प्रत्यग्रेण विधायैतत्प्राक्तनं लघु तद्यथा ।
तस्मिन्नेवोपभुक्ते तु भूयस्तमुपसर्पति ॥ १०४ ॥

युगपच्च न भोगस्तु कर्मणोर्जायते क्वचित् ।
यस्माद्दुःखे सुखं नास्ति न च दुःखं सुखे क्वचित् ॥१०५॥

अन्योन्यमनयोर्यस्मादुपलब्धिर्व्यवस्थिता ।

मतङ्गः ।

प्राग्वासनाभिभूतस्य भोक्तुमभ्युद्यतस्य वा ॥ १०६ ॥

तद्बोधयित्री सा त्वन्या स्वेन रूपेण सर्पिता ।
संलक्ष्यते यथा तत्वं तथा वेह महेश्वर ॥ १०७ ॥

परमेश्वरः ।

उपकारापकाराभ्यां वासितस्य शरीरिणः ।
वासनाभिर्युतस्याऽपि बह्वीभिः कालपर्ययात् ॥ १०८ ॥

यत्सङ्गमसमावेशः क्षणात्तत्प्रति कारणम् ।
द्वेषेण चाथ रागेण साटोपेन प्रवर्तते ॥ १०९ ॥

द्वेषकाले न रागोऽस्ति न च द्वेषोऽस्ति रागतः ।
द्वेषाद्दुःखमवाप्नोति सुखमाप्नोति रागतः ॥ ११० ॥

एवं रागविरागाभ्यां लोके यन्मृष्यते मुने ।

मतङ्गः ।

रागद्वेषात्मिका येयं वासना चोदिता त्वया ॥ १११ ॥

असतोऽपि हि दृश्येत तस्मादनियमोह्ययम् ।

परमेश्वरः ।

यदलीकेन भावेन वर्तनं मन्दमेधसाम् ॥ ११२ ॥

परैर्वा प्रेर्यमाणानां कुशलैश्च परं प्रति ।
तथाऽपि तत्प्रवक्तव्यमुभयोरऽपि कर्मजम् ॥ ११३ ॥

तत्फलम्मुनिशार्दूल नान्यथा निश्चितं मनः ।
येनोपायेन यस्येह यद्विपाकस्य सुव्रत ॥ ११४ ॥

सम्भवस्तादृगेव स्यान्मनोबुद्धिश्च नान्यथा ।
सामान्ये परिमाणेऽस्मिन् मायाख्ये मुनिसत्तम ॥ ११५ ॥

आत्मनश्चाविकारित्वाद्विचित्रं कर्मणः फलम् ।
चिदचित्तत्वयोर्यस्मात् स्वभावस्य विपर्ययः ॥ ११६ ॥

नेष्यते कर्मणो भावात्तच्चैवेच्छाविघातिनः ।
अन्योन्यातिशयाल्लोके तस्मात्कर्मवशाद्ध्रुवम् ॥ ११७ ॥

जगदेतत्समस्तं स्यात् कर्म कर्तृवशाद्ध्रुवम् ॥

कर्मणः कारणं कर्ता स पुमानत्र कीर्तितः ।
भोगस्य कारणं कर्म भोगो बन्धस्य कारणम् ॥ ११८ ॥

भोगभुक्भोगसन्ताने बन्धेनैव कलादिना ।
बध्यस्सन्तिष्ठते यस्मात्तस्माद्बन्धोऽतिदुस्तरः ॥ ११९ ॥

प्रादुर्भूतं जगत्कृत्स्नं मायातस्सचराचरम् ।
जगतः कारणं माया मायायाः कारणं मुने ॥ १२० ॥

प्रवृत्तौ शक्तयस्सिद्धाः शक्तीनां कारणं शिवः ।
अकारणश्शिवः प्रोक्तस्तन्त्रेऽस्मिन् परमेश्वर ॥ १२१ ॥

मायेयमाद्या जगतो धरित्री
स्वरूपतस्सा कथिता यथावत् ।
कलादिकोस्या विभवस्समस्तः
सोप्युच्यते कारणकार्यभावात् ॥ १२२ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
मायापटलस्समाप्तः ।

---

# अथ कलातत्त्वपटलः ।

अथातो जगदुत्पत्तिं विचित्ररचनोज्वलाम् ।
समासेनाऽभिधास्यामि शृण्वेकाग्रमना मुने ॥ १ ॥

क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा ।
तदा स्वेन विकारेण करोति विपुलं जगत् ॥ २ ॥

षट्कपालीश्वरा रुद्रा लुप्तव्यापारशक्तयः ।
शिवार्ककिरणव्यूहबलेनोन्मीलितेक्षणाः ॥ ३ ॥

सहसा बोधमायान्ति त्यक्तनिद्रा गतक्लमाः ।
ऐश्वर्यमदमाविश्य स्वव्यापारसुपेशलाः ॥ ४ ॥

क्रीडन्त्यमितभोगेषु शिवतेजोपबृंहिताः ।
येप्यधस्तान्महाभागा रुद्राष्षट् भुवनेश्वराः ॥ ५ ॥

प्रध्वस्तावयवाङ्गास्तु शक्त्यामृतनिषेविताः ।
प्रादुर्भवन्ति संसिद्धाः स्वमदोद्दामगर्विताः ॥ ६ ॥

कृत्स्नवैनाशिका येऽपि क्षेत्रिणो मूढचेतसः ।
विषसम्मूर्च्छितात्मानो ध्वस्तसंज्ञा विचेतसः ॥ ७ ॥

निरुद्धशक्तयस्सर्वे शिवार्ककरचोदिताः ।
विकसन्त्यसुपद्मास्तु मायासरसि विस्तृते ॥ ८ ॥

ईषदुन्मीलितात्मानः कलया विद्धमूर्तयः ।
प्रस्पन्दमानास्तरलाः प्रयान्त्युच्छूनतां मुने ॥ ९ ॥

मतङ्गः ।

सन्निरुद्धाणवी शक्तिर्मायोदरवशानुगा ।
कालेन शाङ्करी तस्या बोधयित्री महाबला ॥ १० ॥

कलेति या तृतीयोक्ता क्वागता परमेश्वर ।

परमेश्वरः

यथा क्षेत्रम्बुसंयोगाद्बीजं वायुसमीरितम् ॥ ११ ॥

क्षणादुच्छूनतामेति सोष्मणा प्रबलीकृतम् ।
मृद्बीजाम्बुसमायोगात्तत्रैवाग्निस्समारुतः ॥ १२ ॥

व्यक्तीभूतो विवृद्ध्यर्थं तथा संयोगजा कला ।
विवृद्धयेऽभिलाषेण यथा युक्तः प्रबुध्यते ॥ १३ ॥

संयोगोन्मीलिनी ज्ञेया पुंसो मायात्मजा कला ।
तुषकम्बुकसंयोगात्तण्डुलाज्जायतेऽङ्कुरः ॥ १४ ॥

तद्वन्मायाणुसंयोगाद्व्यज्यतेऽचेतना कला ।
यद्यपीयं कला सूक्ष्मा माया पापसमुद्भवा ॥ १५ ॥

उभयोरपि संयोगाच्चेतनाचेतना कला ।
सुखदुःखोपभोगस्य द्वारमेतत्सदोचिता ॥ १६ ॥

पुमांश्चेतन उद्दिष्टो मायातत्वमचेतनम् ।
तत्सङ्गमसमुत्थेयं कला कलयते जगत् ॥ १७ ॥

न स्वयं मुनिशार्दूल कारणाग्निकरेरणात् ।
सुसूक्ष्मा विमला सत्ता यासा ज्ञानक्रियात्मिका ॥ १८ ॥

समर्थीकृत्य कलया भोगेषु विनिपात्यते ।
यस्मान्मोहादिना व्याप्ता चिन्मात्रासन्नगोचरा ॥ १९ ॥

यावद्विद्यादयो न स्युर्भावाः पुंस. प्रवृत्तये ।
अनुमानोज्झिता तावत्कलेयंत्वग्यथा तरोः ॥ २० ॥

वेदने सुखदुःखानां नान्यत्किञ्चित्प्रविद्यते ।
विद्यारागात्मकैर्यावद्विकारैर्न प्रवर्तते ॥ २१ ॥

प्रविकीर्णबलः पश्चात्सर्वं वेत्ति करोति च ।
बाह्योऽर्थोऽतीव यस्स्थूलः तद्विकारैः प्रधानजैः ॥ २२ ॥

प्राधानिकेन कायेन प्रधानस्स्थस्स एव हि ।
विजानाति मुनिव्याघ्र सति तत्वे कलात्मके ॥ २३ ॥

नासत्वादतिसूक्ष्मत्वान्निर्मलत्वाच्च कारणात् ।
कलान्तर्वर्तिनी ज्ञेया कलयित्री महात्मनः ॥ २४ ॥

शक्तिश्शक्तिमतः पत्युर्वीर्येणातिबलोत्कटा ।
तयोपोद्बलिता चित्स्याच्चेतनोद्बलने क्षमा ॥ २५ ॥

चैतन्यमपि तद्योगा(दा)शुगृह्णाति पुद्गलः ।
स्वकर्मवासनायत्तादुद्भूतं चलतः पुरा ॥ २६ ॥

तत्वान्मायात्मकाद्दुःखं सुखं वाऽपि यदुत्कटम् ।
एवमादौ प्रकर्तव्या सृष्टिर्ग्रन्थैः कला पशोः ॥ २७ ॥

यथाऽग्नितप्तं मृत्पात्रं जतुनाऽऽलिङ्गने क्षमम् ।
तथाऽणुः कलया विद्धो भोगांश्छक्नोति वासितुम् ॥ २८ ॥

---

१. कलेयत्त्वग्यथातुरैरिति पाठभेदः । २. अनुगृह्णाति पुद्गलमिति पाठभेदः । ३ पुनः इति पाठभेदः ॥

स्वार्जितान् परया प्रीत्या कलयाणुः कलाप्यथ ।
स्वालिङ्गिताणुना यस्मात्तयोस्तस्माद्विभागतः ॥ २९ ॥

न शक्यतेऽन्तरं द्रष्टुमेकमेवोपलक्ष्यते ।
तथाऽपि कारणज्ञानकिरणोद्योतिते हृदि ॥ ३० ॥

बुद्धिः प्रवर्तते ज्ञातुं स्वभावेनैव पेशला ।
भोगधात्री कला ज्ञेया कलाधारश्च पुद्गलः ॥ ३१ ॥

तत्स्थः कर्मविपाकेन भूरिणाऽभिमतेन तु ।
वासितो नोत्सहेत्त्यक्तुं भूयोभूयोऽनुरज्यते ॥ ३२ ॥

भोगानामपि नान्योऽस्ति कलां त्यक्त्वा समाश्रयः ।
ततोऽयं नियमस्स्पष्टः संसारोऽतिदुरुत्तरः ॥ ३३ ॥

किन्तु कारणवक्त्राब्जसमुद्भूतेषु सुव्रत ।
ज्ञानचक्षुःप्रदीपेन सम्यगालोक्य सादरम् ॥ ३४ ॥

अयं पुमानियं चैषा कला दोषालयाऽशुभा ।
अनयोरन्तरं ज्ञात्वा स्वैस्थो[1] निर्वात्यसंशयम् ॥ ३५ ॥

इत्थं गुणवते नेयं[2] स्वधर्मेण स्थिता कला ।
अस्यां भुवनमाला तु स्थिता रुद्राणुसन्ततेः ॥ ३६ ॥

भोगार्थं रचिता धात्री क्रीडनाय सुखोदया ।
प्रह्लादनविनोदाढ्यभुवनैर्दशभिश्चिता ॥ ३६ ॥

---

१. स्वतो इति पाठभेदः । २ सेयं स्वधर्मेण व्यवस्थिता इति पाठभेदः ।

प्राप्तकामोदयास्तत्र रुद्रा क्रीडन्त्यनिन्दिताः ।
वामदेवो महातेजाः ज्येष्ठश्चैव महाबलः ॥ ३८ ॥

रौद्रो रुद्र इति ख्यातः कालश्चेति महाबलः ।
कलवीकरणोऽन्योऽपि पञ्चमोऽतीव पुष्टवान् ॥ ३९ ॥

बलवीकरणष्षष्ठो भुवनेशस्ततः परम् ।
बलप्रमथनोऽन्योऽपि विख्यातो भुवनेश्वरः ॥ ४० ॥

भूतानां दमनः प्रोक्तो भुवने सुमनोरमे ।
मनंश्चैव महातेजा उन्मनाश्चातीवीर्यवान् ॥ ४१ ॥

एते रुद्राः समाख्याता रुद्रैरात्मसमैर्वृताः ।
अलुप्तशक्तयस्सर्वे बोद्धारः पारमेश्वराः ॥ ४२ ॥

शिवेच्छानुमतास्सर्वे चेष्टन्ते विपुलेऽध्वनि ।

कलेयमाशाश्रयिणी पशूनां धात्रीव भोगे भुवनेश्वराणाम् ।
कृत्स्नं जगत्कालयितुं समर्था भोगेषु योक्तुं कुशलाणुवृन्दम् ॥

सेयं मया ते कथिता यथाव-
त्समासमार्गेण न विस्तरोक्त्या ।
तत्वान्वयप्राप्तिबलेन वाच्यां
विद्यां मुने तामवधारयस्व ॥ ३४ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
कलातत्वपटलस्समाप्तः ।

---

१. महश्चैवेति पाठभेदः ।

# अथ विद्यातत्त्वपटलः ।

अथाणोः कलितस्यास्य कलया प्राक्जगन्निधेः ।
कालाधारेण[1] विज्ञानं बुभुक्षोर्विद्ययाऽभवत् ॥ १ ॥

सत्सु सत्सु विपाकेषु[2] कलाधारेषु कर्मणाम् ।
प्रथक्न्यायाद्विभागाख्या रचना जायते स्फुटा ॥ २ ॥

वेदनं द्विविधं प्रोक्तं तत्प्रवक्ष्यामि विस्तरात् ।
धर्मात्सुखावहं पुंसो येन रागोऽभिजायते ॥ ३ ॥

अधर्माद्दु:खदं ज्ञेयं यस्माद्द्वेषेण युज्यते ।
विद्यान्तरङ्गमुद्दिष्टा यया भोगान् प्रपद्यते ॥ ४ ॥

सासन्नातीव सततं सर्वाङ्गालिङ्गनेक्षमा ।
न तथा प्राकृती बुद्धिर्बहिरङ्गा यतस्तु सा ॥ ५ ॥

अक्षार्थसङ्गमोद्भूतः प्रत्ययो योऽवधार्यते ।
आकृष्टस्स कषायेण भोगाख्येनात्मवर्तिना ॥ ६ ॥

आशयेनातितीव्रेण सम्यग्वेगवता भृशम् ।
अत्युत्कटाभिलाषेण द्वारमाश्रित्य गर्वजम् ॥ ७ ॥

क्रमात्सञ्चोदितं चित्तं बहिरङ्गेन वास्यते ।
वासितं तेन भावेन सङ्कल्प्यं च चिकार्षया ॥ ८ ॥

---

१. धारेय इति पाठभेदः । २. विपाकाख्येति पाठः ।

सङ्गृह्याऽनुविशेत्सर्वं गर्वोऽप्याशयगोचरे ।
प्राप्तोऽन्तरङ्गतां येन स्वाभिमानेन गर्वितः ॥ ९ ॥

अभिमानयितुं शक्तस्स्वधर्मेण बलीयसा ।
अभिमानात्मकात्तत्त्वात्ख्यातिरध्यवसायिनी ॥ १० ॥

तमालम्ब्यात्मधर्मेण बोधाख्येन सुमेधसा ।
ततस्तदुचितं चित्तं ख्यातिर्न्यायाऽनुवर्तिनी ॥ ११ ॥

निवेदयति विद्याया बहिश्चारसुपेशला ।
पुंसोऽन्तश्चारिणी विद्या विवेचयति सादरम् ॥ १२ ॥

एतत्स्रोतस्सदा भोक्तुर्भोगोद्वहनतत्परम् ।
पुमान् प्रत्यागतान् भोगान् क्रमशो व्यूढगोचरान् ॥ १३ ॥

भोगभुक् प्रतिजानाति विद्ययाऽऽत्मनिषण्णया ।
गौणी ख्यातिर्यतस्स्थूला गुणातीतः पुमान् सदा ॥ १४ ॥

इत्थं गुणवती विद्या वेद्यार्थप्रतिपादिका ।
वेत्ता येषाममुक्तात्मा समलोप्यमलस्सदा ॥ १५ ॥

न तेषां वेदने विद्या स्वशास्त्रोपात्तगोचरे ।
बुद्धेश्च विषयास्सूक्ष्माः ततस्ते ज्ञानमोहिताः ॥ १६ ॥

अयुक्तं मुक्तमात्मानं भावयन्ति कुदृष्टयः ।
कलोद्दलितभोगेषु विद्योपोद्बलितः पुमान् ॥ १७ ॥

युज्यते नान्यथा यस्माद्वृत्तयस्तु तदुद्भवाः ।
ख्यातिः प्राधानिकान् भोगान् विवेचयितुमुद्यता ॥ १८ ॥

यदा तदात्मवर्तिन्या विद्यया सुनिरूपिता ।
तदीरिता सती तद्वद्यतस्सा चेतना मता ॥ १९ ॥

पौरुषं भावमाश्रित्य स्वभावोन्मीलिनी मुने ।
विद्येयं सर्वभावानामशिवार्थप्रदायिका ॥ २० ॥

शिवसद्भावकुशला विद्या शुद्धाध्वगोचरे ।

मतङ्गः ।

मायान्तर्वर्तिनः प्रोक्ताः पशवः पाशधर्मिणः ॥ २१ ॥

मायातत्वात्परा विद्या शुद्धाध्वासंप्रदर्शिक ।
सा कथं युज्यतेऽणूनां च्छिन्धि सन्देहजं तमः ॥ २२ ॥

परमेश्वरः ।

शिवाद्यवनिपर्यन्तो योऽयमध्वातिविस्तरः ।
स सर्वश्च चितौ ज्ञेयो नाशिवत्वाद्विमुच्यते ॥ २३ ॥

ध्वस्तमायाशयस्येह पुंसस्स परमेश्वरः ।
शक्त्यात्मवीर्यवर्तिन्या तमः प्रोद्धाट्य निर्मलम् ॥ २४ ॥

करोति विद्यया युक्तं यया जानात्यणुश्शिवम् ।
संसाराच्च विरज्येत प्रध्वस्तकलुषस्सदा ॥ २५ ॥

यदा च निपतेत्तेजस्तच्छिवत्वपशुत्वयोः ।
तदा सीमान्तरं कर्तुमुत्सहेत्साधकं प्रति ॥ २६ ॥

शिवत्वमतिशुद्धं स्यात्पशुत्वमति सामलम् ।
विवेकाग्निरमोघात्मा प्रवृत्तस्सर्वगोचरः ॥ २७ ॥

---

१ प्यतामिति पाठभेदः । २. दायिकेति पाठभेदः ।

निर्दहत्याशयं कृत्स्नं मायोत्थं प्रसवात्मकम् ।
ततो निर्वासनाग्निस्तु साधकस्स न संशयः ॥ २८ ॥

मतङ्गः ।

आशयो नाम कर्मोत्थस्सुखदु खात्मको हि सः ।
किमर्थं ध्रियते नाथ सति ज्ञानोदयेप्यणोः ॥ २९ ॥

परमेश्वरः ।

यथोष्मदग्धबीजानि स्थितये न प्रसूतये ।
लोकेऽस्मिन् मुनिशार्दूल शरीराणि तथैव हि ॥ ३० ॥

प्राक्तनस्योपभोगाय निबद्धस्योपभोगतः ।
क्षयश्चागामिनश्चाऽपि दग्धबीजस्य नान्यथा ॥ ३१ ॥

उपायोऽप्यपरस्सूक्ष्मो भावना ाो व्यवस्थितः ।
अनात्मन्यात्मभावो यः प्रीत्या बन्धस्य कारणम् ॥ ३२ ॥

निर्विशङ्कः परावस्थः क्रीडन्नपि न बाध्यते ।
गतिस्सर्वत्र विख्याता वासनावशवर्तिनी ॥ ३३ ॥

यथा रागवशात्सिद्धे विवशो म्रियते ध्रुवम् ।
न तथा बन्धुवर्गेऽपि विरक्तस्संयतस्तदा ॥ ३४ ॥

जीवन्नपि विमुक्तात्मा यो विरक्तो भवार्णवात् ।
स्थित्यर्थं वर्ततस्तस्य न बन्धो मुनिसत्तम ॥ ३५ ॥

चर्या येयमविद्याख्या सर्वबन्धस्य कारणम् ।
बन्धप्रध्वंसिनी विद्या शिवत्वोन्मीलने क्षमा ॥ ३६ ॥

तावद्बलवती ज्ञेया पाशवी पशुसन्ततौ ।
भोगोपपादने शक्ता यावद्भोगान् समं न हि ॥ ३७ ॥

जानाति विद्ययाऽऽविष्टस्तदा प्रोत्सार्यते सदा ।
अविद्यां त्यजते विद्याप्रसन्ने परमेश्वरे ॥ ३८ ॥

एवं परा प्रवक्तव्या ह्यपरा भोगसिद्धये ।
तस्यां मे सांस्थिता रुद्रास्तान् प्रवक्ष्यामि तेऽधुना ॥ ३९ ॥

भुवनेषु विचित्रेषु रमन्तेऽक्लिष्टसम्पदः ।
रुद्रो ह्येकः शिवो नाम नायकः परमेश्वरः ॥ ४० ॥

विद्याभुवनसङ्गस्य ततोऽनन्तः प्रतिष्ठितः ।
अजेशश्च महातेजाः उमाकान्तश्च वीर्यवान् ॥ ४१ ॥

ईश्वरश्चातिविक्रान्तः प्रचण्डोति निचण्डकः ।
एकवीरश्च सर्पश्च सोष्टमः प्रभुरीश्वरः ॥ ४२ ॥

ततो भवस्य नाथस्य भुवनं भूतिदं महत् ।
उग्रस्याऽपि ततोऽधस्ताद्भीमस्याऽपि ततोपरम् ॥ ४३ ॥

भुवनं वामदेवस्य तत्रैवाऽमिततेजसः ।
एते रुद्रामहाभागा भुक्तिमुक्तिप्रदाश्शिवाः ॥ ४४ ॥

द्विषट्कमाला भुवनेश्वराणां विद्याश्रिता कारणतुल्यवीर्या ।
समासतस्ते कथिता विभज्य रागं त्वहं विस्तरतोऽभिधास्ये ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
विद्यापटलस्समाप्तः ।

---

१ समश्नुते इति पाठभेदः ।

# अथ रागपटलः ।

अथाणोर्विसृतस्यास्य कलासिद्धस्य वेगतः ।
प्रवृत्तस्याऽभिलाषेण विद्ययोन्मीलितस्य च ॥ १ ॥

तस्मादेवाश्रयाद्रागस्सूक्ष्मरूपोऽभिजायते ।
येनाणूरञ्जितः क्षिप्रं भोगभुक् भोगतत्परः ॥ २ ॥

प्रीतिं बध्नाति सहसा यया तेषु निमज्जति ।
आनन्दाह्लादकत्वेन तन्मयो न विभाव्यते ॥ ३ ॥

नोत्सहेत परित्यक्तुं भोगान् स्निग्धतयान्यथा ।
समीपवर्ती मायातः क्षुरितः पशुना सह ॥ ४ ॥

येनोपरक्तो लौल्येन रागी समुपलक्ष्यते ।
सति तस्मिन् प्रधानात्मा स्थूलस्तं प्रति युज्यते ॥ ५ ॥

एकीभूतस्ततः पश्चाद्बलवान् जायते क्षणात् ।
येनाऽभिभूतो बाह्येषु प्रत्ययेष्वनुरज्यते ॥ ६ ॥

तेनाऽयं सुखदः प्रोक्तस्तद्वीर्येणोपबृंहितः ।
सम्मूढस्तत्परो भूत्वा सुखमेवाऽनुमन्यते ॥ ७ ॥

तस्मादणुर्विरक्तात्मा प्राकृतेन बलीयसा ।
विचेतनेन सान्द्रेण शक्यते नाऽभिरञ्जितुम् ॥ ८ ॥

कलयोद्भूतसंयोगाद्वासनाविद्यया यदा ।
प्रदृश्यते विधौ पुंसस्तदा रागवशाद्भुवम् ॥ ९ ॥

प्रध्वस्तात्मगुणो भूत्वा न विजानाति मोहितः ।
यत्तत्त्वाभिजनं दिव्यमविनाश्यजुगुप्सितम् ॥ १० ॥

नित्यमत्यन्तममलमसादृश्यगुणान्वितम् ।
अनभीप्सितसामर्थ्यमानन्त्यममितात्मकम् ॥ ११ ॥

मतङ्गः ।

धर्मात्सुखं ततो रागस्स चाह्लादात्मकस्स्मृतः ।
विरक्तस्य भवेद्दुःखं न्यायेनानेन गम्यते ॥ १२ ॥

परमेश्वरः ।

सुखदस्सर्वदा रागः किन्तु ये यत्र वासिताः ।
श्वयोनावपि यो भोगो यश्च राज्यसुखोदये ॥ १३ ॥

सदृशस्स तु मन्तव्यस्स्वशरीरस्य पालनात् ।
न केवलं सुखायोक्तो रागो भोगभुजस्सदा ॥ १४ ॥

दुःखेष्वपि हि बोद्धव्यो वासितस्य सदात्मनः ।
स्नेहेन यस्य नावाप्तिर्न च रागाद्वियुज्यते ॥ १५ ॥

अणोस्तद्रागजं दुःखं न विरक्तस्य जायते ।
यत्सुखं वीतरागाणां सर्वारम्भेषु सुव्रत ॥ १६ ॥

न तत्सुखं कदाचित्स्याद्रागेणाऽभिहतात्मनाम् ।
दुःखं रागाऽभिभूतस्य यतः प्राप्तस्य जायते ॥ १७ ॥

तदपेक्ष्य सुखप्राप्तौ विद्ध्येवं मुनिसत्तम ।
विरक्तं प्रति यो रागस्सोऽस्ति दुःखस्य कारणम् ॥ १८ ॥

---

१. प्लुन इति पाठभेदः ।

रक्तेभ्योऽपि विरागो यस्तत्सुखं परमं मतम् ।
योऽन्योऽन्यमविरक्तानां विद्विषां न द्वयोर्भवेत् ॥ १९ ॥

योगस्तेन समो नास्ति सुखे वा यदि वाऽसुखे ।
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥ २० ॥

न चाणुस्तद्विजानाति मोहशक्त्यातिमोहितः ।
सुखं रागाऽभिभूतस्य यद्यणोर्दुःखमेव च ॥ २१ ॥

रागश्चाऽनादिमान् सिद्धो विरागस्य किमागतम् ।

**परमेश्वरः ।**

भोग्येन भोगायाकृष्टो यावन्न परिहीयते ॥ २२ ॥

तावत्तस्मिन् स रागी स्यात् भुक्तो वैराग्यमेति हि ।
विरागात्तत्परित्यज्य यदन्यदुचितं फलम् ॥ २३ ॥

तस्मिन् रागबलाविष्टः प्रीतिं बध्नाति पुद्गलः ।

**मतङ्गः ।**

रागेण युज्यते प्रीतौ विरागेण वियुज्यते ॥ २४ ॥

तत्किमर्थं सरागाणां विरागः प्राक् त्वयोदितः ।

**परमेश्वरः ।**

दुःखं प्रति न रागोऽस्ति न च सौख्यं विरागतः ॥ २५ ॥

तथाऽपि सुखदुःखाभ्यां युज्यते कर्मणां वशात् ।
यत्कर्मणोऽपि पक्वस्य फलमत्युत्कटं पशोः ॥ २६ ॥

तत्कार्यकरणाविष्टं न च स्वातन्त्र्यतः क्वचित् ।
तस्माद्रागो विरागो वा कारणात्मवशान्मुने ॥ २७ ॥

प्रवर्ततेऽणुसङ्घस्य वर्त्मन्यस्मिन् सिताऽसिते ।
स्वाम्नायोचितकालस्य मर्यादावसरागता ॥ २८ ॥

या यस्य तां न विप्रेन्द्र व्यतिक्रम्य प्रयाति हि ।
तस्मात्सुखं च दुःखं च रागी समुपलक्ष्यते ॥ २९ ॥

न च रागविरागाभ्यां विना कश्चित्प्रदृश्यते ।
रागोऽन्योऽपि वरस्सूक्ष्मो विशिष्टोऽस्मात्तदात्मकात् ॥ ३० ॥

येन निश्रेयसे पुंसां प्रवृत्तिरुपजायते ।
दृश्यते च विरक्तानां नराणां बन्धगोचरात् ॥ ३१ ॥

आचार्यान्वेषणे रागी शिवमुद्दिश्य सादरम् ।
प्रवर्तते प्रहृष्टात्मा शिवरागाऽनुरञ्जितः ॥ ३२ ॥

तस्माद्धेतुः परो रागो मायाजालापनुत्तये ।
रागविद्याकलाख्येन कञ्चुकत्रितयेन वै ॥ ३३ ॥

प्रच्छादितस्समर्थात्मा क्षेत्री क्षेत्रफलं प्रति ।
इदं तावदणोर्ज्ञेयं भोक्तृत्वं नियतं सदा ॥ ३४ ॥

प्रध्वस्तावयवस्सूक्ष्मो ह्यशक्तश्चातिनिर्गुणः ।
अनादिकालसंरूढः कंचुकेन बलीयसा ॥ ३५ ॥

शक्नोति प्राकृतान् भोगान् भोक्तुं मुनिवरेश्वर ।
तत्वधर्मस्समाख्यातो रागस्य परिविस्तरात् ॥ ३६ ॥

भुवनात्मकोऽन्यस्संक्षेपात्कथयिष्यामि तेऽधुना ।
रुद्राणां भूमयश्चित्रा भुवनैः परिमण्डिताः ॥ ३७ ॥

भुवनं तत्र रुद्रस्य गहनेशानुसम्मतम् ।
अङ्गुष्ठमात्ररुद्रस्य ततो जातस्य धीमतः ॥ ३८ ॥

ईशानस्य ततोऽधस्ताद्भुवनं भूरिभोगदम् ।
एकं पिङ्गेक्षणस्यान्यद्भवस्याऽपि ततोऽपरम् ॥ ३९ ॥

उद्भवस्य च रुद्रस्य ततो वामस्य धीमतः ।
रुद्रोऽन्योऽपि महातेजा भुवनेशोऽतिवीर्यवान् ॥ ४० ॥

एते रुद्रास्समाख्याता रुद्रैरात्मसमैर्वृताः ।
अनौपम्यगुणोपेताश्शिवमण्डलतत्पराः ॥ ४१ ॥

यजन्ति विविधैर्यज्ञैर्मन्त्रं तन्त्रविशारदाः ।
कारणानुमतास्सर्वे सर्वे चाऽमोघशक्तयः ॥ ४२ ॥

रागो यथावत्सकषाययुक्त्या
प्रवर्ततेऽणोस्सुखदुःखभोगात् ।
तथाऽखिलोक्तोऽवसरागतोऽयं
कालोऽधुना वच्मि किमद्भुतं स्यात् ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
रागपटलस्समाप्तः ।

# अथ कालपटलः ।

---

अथ कालः क्रमात्प्राप्तः कञ्चुकत्रयदर्शनात् ।
येनासौ कल्प्यते सूक्ष्मश्शिवसामर्थ्ययोगतः ॥ १ ॥

कलयित्री महाशक्तिः कालमाश्रित्य पुद्गलान् ।
प्रेरयत्यखिले विश्वे कारणाऽऽज्ञानुवर्तिनी ॥ २ ॥

मतङ्गः ।

कालस्सर्वगतस्सूक्ष्मो ह्यनन्तो मूर्तिमान् विभुः ।
अकर्ता निरवस्थानो निष्कामश्चाऽप्यचेतनः ॥ ३ ॥

स कथं प्रेरकत्वेन गम्यते परमेश्वर ।

परमेश्वरः ।

यद्यद्विनश्वरं स्थूलं कृतकं दृश्यमुल्बणम् ॥ ४ ॥

तस्य तस्य तदावस्था धर्मान्तरविसर्पिणी ।
भोक्तुराधारकत्वेन निबद्धा प्राकृती तनुः ॥ ५ ॥

तस्याः कालकृतावस्था कुमारादिजरान्तिका ।
तयोपलक्ष्यते कालस्त्रिविधस्सोऽप्यथोच्यते ॥ ६ ॥

एष्यन्नतीतो लोकेऽस्मिन् वर्तमानश्च सुव्रत ।

मतङ्गः ।

एष्यन्नतीतो देवेश कालेऽस्मिन् सुप्रतीयते ॥ ७ ॥

वर्तमानस्त्रितीयोक्तस्स कथं गम्यते विभो ।

**परमेश्वरः ।**

योऽयमर्थक्रियाभोग्यो घटस्सर्वत्र घुष्यते ॥ ८ ॥

वर्तमान उपादेयस्स्थितये मुनिसत्तम ।
न तत्र युज्यतेऽतीतसमयोऽर्थप्रसिद्धये ॥ ९ ॥

मृत्पिण्डकत्वाद्विप्रेन्द्र एष्यंश्च शकलात्मकः ।
तदवेक्ष्यं सदाग्राह्यो वर्तमानो महात्मभिः ॥ १० ॥

नावस्थान्तरभेदेन वर्तमानः प्रगीयते ।
यथाऽतीतस्तु शिशिरो निदाघश्चाप्यथैष्यते ॥ ११ ॥

वर्तमानो मधुश्चायं येन त्वमसि भावितः ।
वेणुं वादितुमारब्धस्स कालस्ते सुनिश्चितः ॥ १२ ॥

एवं सर्वत्र मन्तव्यस्स्थिर एकोऽधुनाऽऽत्मकः ।
वर्तमानोऽतिसूक्ष्मत्वात्कालो नैत्रोपलक्ष्यते ॥ १३ ॥

तथाऽपि स्थितये सिद्धः प्रपञ्चेऽस्मिन् द्विजोत्तम ।
तस्मात्कालयिता कालो ना काले म्रियते यतः ॥ १४ ॥

नाकालाज्जायते कश्चिन्नाकालाद्वृद्धिमेति हि ।
ऋतुभङ्गिस्सदालिङ्गैस्स्वैस्स्वैः कालोऽभिलक्ष्यते ॥ १५ ॥

अमूर्तस्याऽपि कर्तृत्वं लिङ्गं यस्मात्प्रवृत्तितः ।
निष्कामस्याऽपि यो यस्य स्वभावो ह्यनुवर्तिनः ॥ १६ ॥

स तेन लक्ष्यते कर्ता यथाग्निः पचनादिषु ।
त्रुट्यादिभिरनित्याभिः कलाभिः प्रवहन् सदा ॥ १७ ॥

प्रकरोत्यध्वसंस्थानं नित्यत्वमपि न स्फुटम् ।
कलातो व्यतिरिक्तत्वात्सर्वगश्चाऽप्यमूर्तिमान् ॥ १८ ॥

वस्तुनश्चोद्भवे नाशे क्षये वृद्धौ च लक्ष्यते ।
कर्तृत्वं मुनिशार्दूल न च रूपं स्वयं क्वचित् ॥ १९ ॥

कालस्य शक्यते वक्तुरमूर्तत्वान्महामुने ।
स तस्माद्ग्रन्थिविवराच्चलतोणोर्विभाव्यते ॥ ॥२० ॥

तत्वानां क्रमशो व्यक्त्यै स्थितये च विभागशः ।
संहारे हरणात्पत्युर्नष्ट इत्युपचर्यते ॥ २१ ॥

नात्मा प्रसूयते लोके न च नाशमुपैति हि ।
युक्तं योगविभागाभ्यां संयोगाच्च कलात्मकात् ॥ २२ ॥

अयमुत्पन्न एवाऽत्र नष्टोऽयं वक्तुमादरात् ।
तस्याणोरञ्जितस्येत्थमञ्जनेन कलादिना ॥ २३ ॥

स्फुटः प्रवर्तते कालः पुद्गलं प्रति विश्वराट् ।
कालरूपी महातेजा रुद्रोऽनन्तपराक्रमः ॥ २४ ॥

कलितोऽयोमुखो जन्तुः कञ्चुकैरवकुण्ठितः ।
न विजानाति शुद्धात्मा महामायां यतः पशुः ॥ २५ ॥

पशुत्वात्कलितः क्षिप्रं कालेनाऽनन्ततेजसा ।
नियत्या स्वेन तत्वेन स पश्चाद्विनियम्यते ॥ २६ ॥

येन पुंभावमायाति जगतां पूरणं प्रति ।
जगच्छब्देन माया तत्प्रधानमभिधीयते ॥ २७ ॥

तेनैकत्वमवाप्नोति ताम्रकालीकवद्यथा ।
[1]प्रच्छादितः प्रबुध्यात्मा सर्वाङ्गालिङ्गने क्षमः ॥ २८ ॥

स्फुटं शब्दादिविषयांस्तदा गृह्णाति पुद्गलः ।
एवं कालेन बहुधा कल्प्यमानः पुनः पुनः ॥ २९ ॥

न जानात्युत्तमां सिद्धिं नात्मानं न च देवताम् ।
यावन्न कलया पत्युः प्रेरितोऽणुर्गुरुं प्रति ॥ ३० ॥

एवं कालः प्रवक्तव्यस्तच्च तत्वमनिन्दितम् ।
तत्र ये संस्थिता रुद्रास्तान् प्रवक्ष्यामि विस्तरात् ॥ ३१ ॥

अनन्तविभवामोदसुखेनाऽत्यन्तवासिताः ।
प्रदुद्धर्भुवनेशानः प्रथमः परिकीर्तितः ॥ ३२ ॥

कालाऽनलस्थितोऽधस्ताद्यमश्चाऽतिबलोत्कटः ।
घोरश्चाऽन्यो महातेजा मतङ्गश्चातिवीर्यवान् ॥ ३३ ॥

तत्वतो भुवने चण्डस्स्फुरच्चन्द्रवपुर्गुरुः ।
शाबरो योतिविक्रान्तस्ततोच्छुष्ठो महाबलः ॥ ३४ ॥

एते रुद्रा वृता रुद्रैरनेकैर्भुवनेश्वरैः ।
भुक्तिमुक्तिप्रदास्सर्वे प्रकीर्णकिरणाश्शिवाः ॥ ३५ ॥

मायाभोगभुजस्सर्वे सर्वे चाऽमोघशक्तयः ।
कारणाऽनुमतास्सन्तः क्रीडन्त्यमितविक्रमाः ॥ ३६ ॥

---

१. पश्चादित इति पाठः ।

कालो यथा तत्वविभागयुक्त्या
स्थितोऽध्वनि प्रेरकशीलकत्वात् ।
तथा मयोक्तोऽखिलभावनासु
मुनेऽधुना तान्नियतिं शृणुष्व ॥ ३७ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे,

कालपटलस्समाप्तः ।

---

## अथ नियतिपटलः ।

---

अथेदानीं मुनिव्याघ्र कारणस्यामितद्युते ।
शक्तिर्नियामिका पुंसां सह तत्वेन सर्पिता ॥ १ ॥

नियामकेन भावेन नियमस्थितिहेतुना ।
ययाऽणुर्भोगसन्ताने नियम्य विनिवार्यते ॥ २ ॥

नेच्छन्नपि बलात्तेन नियतिस्सा शिवोदये ।
तन्त्रेऽस्मिन् विहिता विप्र भर्तुराज्ञाऽनुवर्तिनी ॥ ३ ॥

असमञ्जसवैनाशं कृत्वा नियमतत्परा ।
स्वोचितेष्वथ भोगेषु शरीरेषु सुपेशला ॥ ४ ॥

व्यवस्थाकारिणी नान्या विद्यते तत्वसन्ततौ ।
कोटिद्वयं समाख्यातं धर्माऽधर्मात्मकं पशोः ॥ ५ ॥

तदुत्थं व्यक्तिमायाति शरीरं सर्वदेहिनाम् ।
तद्भिमकेऽध्वमार्गस्थं क्षेत्रज्ञं सुनिरूप्य तम् ॥ ६ ॥

नियामयति यस्माद्वै तस्मान्नियतिरुच्यते ।
तयोरप्यधिकं यच्च दुःखं वाप्यथवा सुखम् ॥ ७ ॥

न ददाति समं धत्ते स्ववीर्येणैव सर्वदा ।
न चोपभोगवैकल्यं नाऽभुक्तात्तं समुद्धरेत् ॥ ८ ॥

भुक्तेऽपि स्वविपाकेऽणुं यदन्यदतिरिच्यते ।
तस्मिन्नियोजयेदाशु तुष्ट्यंशमपि[1] नोचितम् ॥ ९ ॥

ददाति हरते यस्मात् कारणेनाऽधिरोपिता ।
तत्तन्त्रस्सततं भोक्ता न च तां वेत्ति मूढधीः ॥ १० ॥

नियम्य बलवत्प्रीत्या भोगिनं भोगतत्परम् ।
स्वेषु भोगेषु वा तृप्तं पुद्गलं दुःखपीडितम् ॥ ११ ॥

ध्वस्तकर्माशयं तस्मान्नियतेष्वपरेषु तम् ।
नियम्य धारयेत्तावद्यावन्न परिहीयते ॥ १२ ॥

द्विविधेष्वप्यथैव स्यादनन्ते सृष्टिवर्त्मनि ।
प्रेर्यं प्रेरयितुं शक्ता स्वभावेनात्मवर्तिना ॥ १३ ॥

यथाविष्टः पुमाँल्लोके प्रगृह्णाति बलीयसा ।
विकारं दर्शयत्याऽऽशु नियत्या तद्वदेव हि ॥ १४ ॥

धर्माऽधर्मविपाकेऽस्मिन् तुल्या कोटच्युपलक्ष्यते ।
नियतिस्तत्समुद्धाराद्यदा पश्यति कर्मणि ॥ १५ ॥

समा भोक्तुस्तदा तस्य युगपद्धृत्यसम्भवात् ।
शून्यवत्संस्थिता यस्मान्निरपेक्षैव लक्ष्यते ॥ १६ ॥

---

१. तुष्ट्यंशमपि इति पाठभेदः ।

समानधर्मव्यापारः कष्टोऽपि स्यात्सुदुष्करः ।
युगपत्सुखदुःखाभ्यां योक्तुं पुंशक्यते कथम् ॥ १७ ॥

एतस्मिन्नन्तरे कर्तुर्यासोद्धरणशीलिनी ।
प्रोत्सार्य नियतिं वेगात्स्ववीर्येणाऽतिभूरिणा ॥ १८ ॥

क्षेत्रज्ञं वासयेत्पश्चात् कृत्वा भोगपराङ्मुखम् ।
नानायासामहाघोरादस्मात्संसारसागरात् ॥ १९ ॥

अस्ति कश्चिदुपायोऽन्यो येन सन्त्यज्य किल्बिषम् ।
प्राप्यते परमं सौख्यं यत्तत्पदमनिन्दितम् ॥ २० ॥

तेन शक्तिनिपातेन सम्यक् संरक्ष्यते ह्यणुः ।
नियत्याख्येन तत्वेन न नियम्येत कर्हिचित् ॥ २१ ॥

यतस्तस्या वशो न स्यात्स समानतया स्थितः ।

मतङ्गः ।

समानपरिपक्वस्य कर्मणोऽणुर्न युज्यते ॥ २२ ॥

भोगे शक्तिनिपाताच्च निरवस्थान एव वा ।
न ज्ञानं न परा दीक्षा न च योगः प्रवर्तते ॥ २३ ॥

चर्यावाथ महादेव तत्क्षणान्मुच्यते न च ।
विरोधस्स महानत्र समाधानं ब्रवीहि मे ॥ २४ ॥

परमेश्वरः ।

एतस्मादाशयादन्यदाशयो योऽनुसर्पति ।
स तेन वासितः क्षिप्रं तन्मयत्वमुपैति हि ॥ २५ ॥

यथा तथाऽपि सामर्थ्यं प्राप्य शक्तिमयं परम् ।
तद्वासितो निरुद्धात्मा ध्वस्तकर्माशयोऽपि सन् ॥ २६ ॥

हिङ्गुपूर्णं यथापात्रमुपयुक्तोऽपि न त्यजेत् ।
तद्वासस्तद्वदेव स्याच्छरीरं मुनिपुङ्गव ॥ २७ ॥

न च तत्राऽस्ति तद्द्रव्यं न च वासः प्रहीयते ।
एवमाहितसंस्कारः पूर्वाशयवशात्पुमान् ॥ २८ ॥

युज्यते सुखदुःखाभ्यां नचात्यन्तं प्रबाध्यते ।
शरीरं निरपेक्षत्वाद्विमुक्तो नात्र संशयः ॥ २९ ॥

नापेक्षते परान् भोगान्निराकांक्षस्सदैव हि ।
रञ्जितश्शिवरागेण यावद्देहविपर्ययः ॥ ३० ॥

प्रागेव हि विमुक्तोऽसौ यदा युक्तश्शिवेच्छया ।
किन्तु दीक्षात्मकैर्लिङ्गैर्न विना ज्ञायते क्वचित् ॥ ३१ ॥

ततः प्रवर्तते सर्वो निष्ठान्तो यश्शिवोदितः ।
संस्कारस्सर्वजन्तूनां शिवशक्त्युद्धृतात्मनाम् ॥ ३२ ॥

तस्मान्नियतितत्वस्य वीर्यं शक्त्युद्धृतं प्रति ।
नियामकत्वभावेन न तु सर्पति कर्हिचित् ॥ ३३ ॥

नियतश्चिद्यतः पुंसो भोगाय विसृता पुरा ।

याणोर्नित्यप्रसक्ता स्थितिनियमवशाद्भोगदा सादरेण
शक्ता भोगान्विभक्तुस्समुचितविषयान्न्यायतो नीतिभावान् ।
रूपेणात्यन्तशुद्धा विषमतटगता लक्ष्यते या पशूनां
व्याख्यातेयं समासात्प्रथितगुणगणा साम्प्रतं पुंविधास्ये ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
नियतिपटलस्समाप्तः ।

# अथ पुंस्तत्वपटलः ।

अथ पुंस्तत्वनिर्देशस्साधिष्ठानस्स वर्णितः ।
न च तत्वं मुनिव्याघ्र द्वितीयं पुरुषाह्वयम् ॥ १ ॥

कञ्चुकत्रितयाऽऽविद्धं कालेन कलितं शनैः ।
नियत्यालिङ्गितो याति पुम्भावेनात्मवर्तिना ॥ २ ॥

यस्मात्प्रधानमुत्कण्ठादापूरयति भावितः ।
तस्मात्पुंभावसामर्थ्यात्पश्चाऽव्ययवलक्षितः ॥ ३ ॥

पुष्णाति प्रकृतिं यस्मात्तस्मात्पुरुष उच्यते ।
तज्जेष्वेवोपभोगेषु पञ्चतत्वोपबृंहितः ॥ ४ ॥

न समर्थोन्यथा भोक्तुं दृक्क्रियोऽपि यतस्सदा ।
अकर्ता निर्गुणस्सूक्ष्मो ह्यशक्तश्चेति पठ्यते ॥ ५ ॥

सोऽणुः पुम्भावमापन्नः प्रधानाऽऽशयगोचरः ।
प्राप्याऽभिलाषमोहेन न च भेदोऽस्ति कश्चन ॥ ६ ॥

तस्मात्सर्वेषु तत्वेषु क्षरतोऽस्य विभागकृत् ।
यथाश्वत्थकणात्क्षुब्धात्सर्वतः प्रविभागतः ॥ ७ ॥

तत्पत्रमूलशाखादिविभागोऽस्य पृथक् पृथक् ।
तद्वत्सृष्टेर्विभागस्स्यात्तत्त्वानां मुनिसत्तम ॥ ८ ॥

प्रकरोति महादेवस्स्वतन्त्रः परमेश्वरः ।
स्थूलं मायासमुद्भूतं तत्वं प्रकृतिसंज्ञकम् ॥ ९ ॥

हार्यं कार्यं च धार्यं चाप्यस्वतन्त्रमचेतनम् ।
पुरुषस्फुरणाद्व्यक्तं पुंरागाकुलितं सदा ॥ १० ॥

तयोर्योगाज्जगत्कृत्स्नं ब्रह्माद्यं सचराचरम् ।
व्यक्तिमायाति विस्पष्टं कारणैश्च समीरितम् ॥ ११ ॥

तयोरन्योन्यसंयोगात् साध्यसाधनकल्पना ।
जगतश्शक्यते वक्तुं नान्यथा तु कदाचन ॥ १२ ॥

तस्मात्पुंदृक्क्रियामात्रः प्रधानोपरतस्सदा ।
प्रधानमपि सूक्ष्मत्वात् सत्तामात्रं स्वभावतः ॥ १३ ॥

तद्भोगेषु समासक्तो भोगी पुमुपलक्ष्यते ।
भोग्यत्वादपि तत्वं स्यात्प्रधानमुपलक्ष्यते ॥ १४ ॥

एवमन्योन्यसंयोगादुभयोरपि तत्वयोः ।
साध्यसाधनधर्मित्वमित्युक्तं युक्तितो मया ॥ १५ ॥

अनादिराशयोपेतः प्रेरितश्च कलादिना ।
भोक्तेत्येवं पुमान् प्रोक्तो भुङ्क्ते प्रकृतिजान् गुणान् ॥ १६ ॥

अस्वतन्त्रः पुमानस्मात्प्रकृतिश्चाप्यचेतना ।
तयोर्योगः कृतो धात्रा देवदेवेन शक्तिभिः ॥ १७ ॥

युक्तस्तन्मयतामेति यतोऽयं संस्थितः प्रभुः ।
तत्तत्वं तत्त्वसन्ताने पुमाख्यं परिकीर्तितम् ॥ १८ ॥

प्रकृतेरप्यनन्तत्वाच्छरीरस्यानुरूपतः ।
प्रदीपमात्रवद्योगात् स्थूलसूक्ष्मविभागतः ॥ १९ ॥

व्याप्तिस्तस्य सदा ज्ञेया वैश्वरूप्यान्महामुने ।

अस्यात्मनस्तत्वविभागसंस्था
यया स भोक्तेति समर्थितात्मा ।
सेयं मया ते कथिता यथाव-
द्भोग्यं जगत्तच्च विधौ विधास्ये ॥ २० ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
पुंस्तत्वपटलस्समाप्तः ।

---

## अथ प्रधानतत्वपटलः ।

---

अथ रुद्रा महात्मानो योगियोगेश्वराश्शिवाः ।
सूक्ष्मास्सूक्ष्मतरास्सन्तः प्रक्रीडत्तत्त्वसंस्थिताः ॥ १ ॥

श्रीकण्ठश्च महातेजास्सर्वरुद्राग्रनायकः ।
तस्योर्ध्वभागे भुवनं चारु सर्वगुणालयम् ॥ २ ॥

स नाथो व्यक्तरूपी स्यात् व्यक्तस्वेच्छाविधायिनः ।
अव्यक्तमखिलस्याऽस्य जगतस्सृष्टिकारणम् ॥ ३ ॥

स्वशक्तिकिरणैः क्षोभ्यं व्यक्तिं नयति तत्क्षणात् ।
व्यक्तस्य वृत्तयस्तिस्रो विसृतास्सर्वगोचराः ॥ ४ ॥

तासां या परमा काष्ठा तत्प्रधानमिहोच्यते ।
प्रतिसञ्चारमापन्नं जगदेतद्गुणात्मकम् ॥ ५ ॥

प्रकृष्य धारितुं शक्तं स्वोदरे विनिपद्यतु ।
तस्मात्प्रधानशब्देन तत्त्वमुक्तं सनातनम् ॥ ६ ॥

अस्मात्परं नास्त्यपरं येषां भावः प्रतिष्ठितः ।
न ते मुक्ता मुनिव्याघ्र पुनरायान्त्यधोमुखाः ॥ ७ ॥

स्वव्यापाराऽवसाने तु ब्रह्मा लोकपितामहः ।
यस्मिन् लयमवाप्नोति श्रीकण्ठेच्छासमीरितः ॥ ८ ॥

श्रीकण्ठस्याऽपि नाथस्य सम्प्राप्याहर्मुखं विराट् ।
व्यक्तिमायाति सहसा प्रबुद्धस्स्वेन तेजसा ॥ ९ ॥

ततश्चकार विविधां सृष्टिं क्षेत्रज्ञभोगदाम् ।
सत्वं रजस्तमश्चेति गुणास्स्वस्वप्रवृत्तिषु ॥ १० ॥

प्रवृत्तास्सम्यगित्युक्ता विशेषान्तं व्यवस्थया ।
लक्ष्यन्ते सुरमानुष्यतिर्यग्जातिष्ववस्थिताः ॥ ११ ॥

प्रसारणाकुञ्चनाभ्यां प्रधानस्य महात्मनः ।
सर्गः प्रसारणं प्रोक्तं प्रतिसर्गोपसर्पिणम् ॥ १२ ॥

एवंविधं प्रधानं तद्ब्रह्मणा सहितं पुरा ।
श्रीकण्ठकिरणाघ्रातं क्षोभमायात्यसंशयः ॥ १३ ॥

ईषदुन्मीलितं सत्त्वं प्रवृत्तं रजसस्स्मृतम् ।
संहारस्तमसो वृत्तं यतस्तस्मान्न विद्यते ॥ १४ ॥

पृथक्तत्वं प्रधानाख्यमतस्सर्वगुणात्मकम् ।
महदादि महत्कार्यं कारणेभ्योऽपि लक्षणम् ॥ १५ ॥

प्रवृत्तिरसतो यस्मान्नेष्यते मुनिसत्तम ।
युगपच्चलतस्तस्य स्थूलस्थूलतराणि तु ॥ १६ ॥

सर्वानुग्रहसिद्धानि शेषान्तानि कलावतः ।
तत्वानां तत्वमार्गेऽस्मिन् सूक्ष्मसूक्ष्मतराणि तु ॥ १७ ॥

प्रतिलोमात्प्रसिद्धानि वक्तव्यानि समासतः ।
तत्वं जगदुपादानमित्युक्तं पारमेश्वरे ॥ १८ ॥

तन्त्रेऽस्मिन् वृत्तयस्तस्य शृणु विप्र यथाक्रमम् ।

गुणत्रयं ह्येतदुदारवृत्तं
प्रशान्तकालाऽनुगतं समस्तम् ।
प्रसूतिरस्यावसरागतेयं
मत्तस्समासादवधारयस्व ॥ १९ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे,
प्रधानतत्वपटलस्समाप्तः ।

---

## अथ गुणपटलः ।

---

अथातस्सम्प्रवक्ष्यामि सृष्टिं विस्तारतः क्रमात् ।
प्रबुद्धोऽहर्मुखे स्वाख्ये श्रीकण्ठोऽनन्तविक्रमः ॥ १ ॥

स्वभावो वृत्तयस्तस्य प्रबुद्धस्य समन्ततः ।
शक्तयो विसृतास्सूक्ष्मा वीर्येणातिबलीयसा ॥ २ ॥

तत्संयोगाच्चलत्याशु प्रधानं स्वासु वृत्तिषु ।
वृत्तयश्च गुणाः प्रोक्ता न्यग्भूता प्रकृतिर्यतः ॥ ३ ॥

स्वभावोऽपि विकारी स्यात्प्रकृतिस्सोच्यते मुने ।
तस्मादेव परिक्षोभात् प्रबुद्धाः पारमेश्वराः ॥ ४ ॥

चेष्टन्ते विविधैर्भोगैः प्रकीर्णकिरणाश्शिवाः ।
प्रधानतत्वे प्राधान्यं तेषां श्रीकण्ठनिर्मितम् ॥ ५ ॥

शिखेदस्य पुरं तत्र सहस्रादित्यसप्रभम् ।
एकवीरस्य रुद्रस्य पुरमन्यत्सुशोभनम् ॥ ६ ॥

पुरं पञ्चान्तकस्याऽपि सूकरस्य च धीमतः ।
पिङ्गलस्य ततोऽधस्तात् पुरमन्यत्सुशोभनम् ॥ ७ ॥

ज्योतिष्मतः पुरं दिव्यं चारुचन्द्रांशुनिर्मलम् ।
ततस्संवर्तकस्याऽपि चण्डस्य च महात्मनः ॥ ८ ॥

क्रोधीशस्याप्यतोऽधस्तात्पुरमन्यत्सुनिर्मलम् ।
तस्मादेव महाग्रन्थेर्गुणपिण्डात्मकं शुभम् ॥ ९ ॥

साधिकारपराक्रान्तं ब्रह्मणोऽण्डं पुराऽभवत् ।
तन्मध्ये कललं सूक्ष्मं गुणात्मकमनिन्दितम् ॥ १० ॥

तद्भिन्नशक्तिसम्पाताद्यतोऽभिव्यक्तवान्विराट् ।
सत्वोत्कटेन भावेन चतुष्षष्टिगुणान्वितः ॥ ११ ॥

अन्योऽपि सात्विको भावः चतुर्थस्सम्प्रतिष्ठितः ।
तेन सांसिद्धिकेनायं ब्रह्मामरगुरुः प्रभुः ॥ १२ ॥

करोति प्रक्रियां चित्रां नानाभुवनपालिकाम् ।
गुणास्सर्वं यतो विप्र ततस्तेषां प्रवृत्तयः ॥ १३ ॥

समासेनोपवर्ण्यन्ते सत्वादीनां यथाक्रमम् ।
सत्वादन्यः पुमान् सिद्धः स च मुक्तो विपश्चिताम् ॥ १४ ॥

अनेनाशययोगेन विमुक्ताः परमाणवः ।
तेऽधुना क्षोभमायान्ति यतस्संयोजिता बलात् ॥ १५ ॥

शिवशक्तिसमूहेन ये च लीनाः क्रमेण तु ।
व्यक्तीभूतेषु सर्वेषु गुणवृत्तं स्वकं स्वकम् ॥ १६ ॥

विस्पष्टं शक्यते वक्तुं नान्यथा मुनिसत्तम ।
स्थैर्यं धैर्यं तथा दाक्ष्यमार्जवं लघुता तथा ॥ १७ ॥

सन्तोषो मार्जवं शौचं व्यवसायक्षमा स्मृतिः ।
सौहित्यं परता क्षान्तिः दया दानं घृणा सदा ॥ १८ ॥

औत्सुक्यं चेति सत्वस्य वृत्तयस्समुदाहृताः ।
क्रौर्यशौर्यमहोत्साहसाभिमानसकल्कता ॥ १९ ॥

दार्ढ्यं च निर्दयत्वं च भोगो दम्भश्च वृत्तयः ।
रजसः प्रतिपत्तव्यास्तन्त्रेऽस्मिन् पारमेश्वरे ॥ २० ॥

अरतिर्मन्दता दैन्यं पैशुन्यं गुरुता सदा ।
निद्राधिक्यं मदालस्यं निरोधो मूढता तथा ॥ २१ ॥

तमसो वृत्तयः प्रोक्ताश्शुद्धास्सर्वेषु जन्तुषु ।
विमिश्राश्च यथा तेषां गुणानां युगपत्स्थिता ॥ २२ ॥

प्रवृत्तिर्नेष्यते यस्माद् व्यक्तानां कारणादृते ।
शास्त्रेऽस्मिन् मुनिशार्दूल! तथाप्युत्कृष्टदर्शनात् ॥ २३ ॥

व्यक्तास्सम्परिगीयन्ते यतो यत्प्रबलीकृतम् ।
दृश्यं तेभ्योऽपरं नास्ति द्रष्टुर्भोगाऽभिलाषिणः ॥ २४ ॥

श्रीकण्ठस्तत्क्रियावासः प्रधानादवतीर्य तु ।
तथा विसर्ज्य स्वं वीर्यं रुद्राणां स्थितये विभुः ॥ २५ ॥

तच्छक्तिबलमाहात्म्याद्रुद्राश्चेष्टन्त्यदुःखिताः ।
वीरभद्रादयश्चैव ब्रह्मान्ता लोकनायकाः ॥ २६ ॥

पत्युस्सत्वोत्कटस्थानं तत उन्मीलितं शनैः ।
स्थानमौमं सुदीप्तं तु राजस्यं स्यात्सुखावहम् ॥ २७ ॥

लेशानुविद्धसत्वेन कुमारस्य महात्मनः ।
विष्णोरभ्युदितं तत्र स्थानं शुद्धं रजोमयम् ॥ २८ ॥

ब्रह्मणस्तदधस्तात्तु किञ्चित्तामसमीरितम् ।
विभोस्तमसि विज्ञेयं राजसोन्मीलितं शनैः ॥ २९ ॥

कृतं नाम्ना परं स्थानं तमस्येव महामुने ।
रजश्च संशयोपेतमीषत्सत्वोत्थितं हि तत् ॥ ३० ॥

अकृतं शुद्धतमसि स्थानमुक्तमथाष्टमम् ।
तमसो वृत्तिमाश्रित्य यथाऽनुक्रमतस्स्थिताः ॥ ३१ ॥

योगिनो योगवीर्येण कृताद्या भुवनेश्वराः ।
रजोवृत्तिकृताधारा ब्रह्माद्याश्चाप्यनुक्रमात् ॥ ३२ ॥

सत्वोत्कटेन भावेन स्थानं योगयुजामपि ।
औमं मन्त्रोदितं दिव्यं शुद्धसत्वमतः परम् ॥ ३३ ॥

विना येनाऽपि सिद्धानां क्रम एष उदाहृतः ।
योगवीर्यमदामोदविलासेन महाबलाः ॥ ३४ ॥

अतिरस्कृतधर्माणो रुद्राः क्रीडन्त्यनिन्दिताः ।
देवानां बलमाक्रम्य सूक्ष्मशक्तियुताश्शिवाः ॥ ३५ ॥
न तेषां शक्यते वक्तुं प्रमाणं मुनिपुङ्गव ।
यावत्सम्यङ्निरूप्यन्ते स्वतेजो गूढगोचराः ॥ ३६ ॥

निसर्गेणैव चेष्टन्ते ये च सिद्धा महाधियः ।
शिवाद्यवनि पर्यन्ते क्रीडन्त्यध्वनि संस्थिताः ॥ ३७ ॥
चन्द्रांशुनिर्मलं सत्वं प्रविकासबलोत्कटम् ।
अरुणाभं रजस्तीव्रं प्रवृत्तिगुणवत्तरम् ॥ ३८ ॥

तमःपुष्पविवर्णाभं स्वभावात्सुनियामकम् ।
आह्लादनस्वभावो यः सर्वदा सर्वजन्तुषु ॥ ३९ ॥

शुद्धसत्वसमायोगात् व्यक्तस्यैवोपजायते ।
आवेशयन् प्रदृश्येत सर्वारम्भेषु सुव्रत ॥ ४० ॥

रजसश्शुद्धभावत्वान्मूढता तमसस्स्मृता ।

व्यक्ता गुणाः कारणवीर्ययोगाद्
व्याप्तं जगद्यत् स्थितये पशूनाम् ।
व्यावर्णितास्ते तव विप्रमुख्य
बुद्धेरिदानीं शृणु विस्तरं मे ॥ ४१ ॥

इति श्रीमतन्त्रपारमेश्वरे विद्यापादे
गुणपटलस्समाप्तः ।

---

# अथ बुद्धिपटलः ।

अथ बुद्धेर्विकासो यस्स्वभावेनाऽनुमीयते ।
क्षुब्धेभ्यस्सहसा पूर्वं गुणेभ्यो भूतगोचरा ॥ १ ॥

बुद्धिरध्यवसायेन भावानां जननी शुभा ।
वर्ण्यतेऽष्टगुणोपेता विभागेन यथाक्रमम् ॥ २ ॥

मतङ्गः ।

कार्यकारणभावो यस्स सर्वत्र प्रतीयते ।
स्वात्मलोपकृते ह्येको द्वितीयो मातृपुत्रवत् ॥ ३ ॥

कर्तृकर्मतृतीयोऽन्यो लोकेऽस्मिन् सुप्रतीयते ।
स्वात्मलोपकृतो यो हि प्रध्वस्तात्पयसो दधि ॥ ४ ॥

व्यक्तिमायाति यद्येवं गुणनाशस्ततोऽखिलः ।
बुद्धिरेका प्रवक्तव्या गुणानां वृत्तयः कुतः ॥ ५ ॥

मातृपुत्रकृतान्न्यायान् व्यापित्वं नेष्यते विभो ! ।
कर्तृकर्मविभेदाच्च वस्तुधर्मोऽनवस्थितः ॥ ६ ॥

परमेश्वरः ।

लोकसंव्यवहारार्थं मृदस्थाल्यादयो यथा ।
वस्तुनश्चाप्यभेदेऽपि व्यक्तिभेदात्पृथक् पृथक् ॥ ७ ॥

लोकस्याप्यथ लोकेऽस्मिन् किं न दृष्टं महामुने ।
साध्यसाधनभावेन विभिन्ना स्थानसन्ततिः ॥ ८ ॥

शक्तयः परमेशस्य स्वभावेन बलोत्कटाः ।
प्रवृत्तास्सर्वकार्येषु कर्तृत्वेनात्मवर्तिना ॥ ९ ॥

घटना स विशुद्धेन सर्वदिक्केण भूरिणा ।
न मीमांस्या यतः पत्युरत्यद्भुतगुणोदयाः ॥ १० ॥

ताभिस्सञ्चालितेभ्योन्या गुणसंस्था प्रवर्तते ।
यथाऽन्नपरिपाकस्य भेदे देहेऽप्यवस्थिताः ॥ ११ ॥

रसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः ।
रसस्यात्मगुणो व्यापी देहो रसमयो यतः ॥ १२ ॥

स्थानभेदो विनाभावो रसस्य मुनिसत्तम ।
यथा तथा न भेदोऽस्ति गुणानां स्थानभेदतः ॥ १३ ॥

व्यक्तः पुंसोऽपकाराय भेदेन महदादिना ।
यथार्थोऽनेकधा भोग्यो भोक्तुः कर्मविपाकजः ॥ १४ ॥

ततो गुणा विकारैस्स्वैः तावद्भिर्निःसृता मुने! ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं सात्विका गुणाः ॥ १५ ॥

निसर्गेणैव ते व्यक्ताद्वेधस्युत्कृष्टवृत्तयः ।
प्रजापतेरजः किञ्चित्तेन जानन्ति वेधसः ॥ १६ ॥

सदृशं मुनिशार्दूल सोमस्य रजसोत्कटम् ।
इन्द्रस्यार्धादिकं तच्च रजसा सत्वमीदृशम्[1] ॥ १७ ॥

गन्धर्वस्य तदेवोक्तं तमसालिङ्गितं शनैः ।
यक्षसोऽपि तमः प्रोक्तं तच्चार्धेन रजोगुणैः ॥ १८ ॥

---

१. ईप्सितमिति पाठः ।

राक्षसानां रजोऽर्धेन पादोनं कीर्तितं[1] तमः ।
तमसोत्कृष्टमेवोक्तं रजः प्रध्वस्तगोचरम् ॥ १९ ॥

पिशाचानां विजानीयात् बुद्धितत्त्वनिदर्शनात् ।
देवानां योनयस्सिद्धा ब्रह्मादीनां महात्मनाम् ॥ २० ॥

तेन ते सात्त्विका देवा अष्टावपि महौजसः ।
मानुषा राजसाः प्रोक्तास्तिर्यक्तामसलक्षणम् ॥ २१ ॥

तथाऽपि युक्तितो वाच्यं क्रमेणैव यथास्थितम् ।
वर्ततः प्राकृते देहे पुरुषस्याऽभिलाषिणः ॥ २२ ॥

तदापूरितवीर्यस्य प्रधानस्य विचेतसः ।
बुद्ध्यादयः प्रवृत्त्यर्थं वृत्तयः प्राङ्निरूपिताः ॥ २३ ॥

कारणेन जगद्धात्रा पुरुषाणां विभूतये ।
बोधयित्री स्मृतिः ख्यातिः भावानां योनिरव्यया ॥ २४ ॥

भोक्तुर्भोगाभिलाषेण बुद्धिरष्टगुणान्विता ।
अणोरध्यवसायेन प्रयुक्ताध्यवसायिनी ॥ २५ ॥

प्रवर्तते ततो भावैरनन्तैः प्रत्ययात्मकैः ।
प्रत्ययोऽक्षार्थयोगार्थः पुंसः प्रत्ययकृत्सदा ॥ २६ ॥

भावनातस्स्थितो भावो वास्यते येन पुद्गलः ।
सत्त्वेनापूरितस्येत्थं महतश्शनकैरजः ॥ २७ ॥

यदा तु ध्वस्ततमसस्तदाऽसौ परमेश्वरः ।
बुद्धावाश्रित्य किरणैरमोघैर्बलशालिभिः ॥ २८ ॥

---

१. तं शनैरिति पाठभेदः ।

नियुनक्त्यतिवीर्येण पुरुषं धर्मसाधने ।
धर्मो हि द्विविधः प्रोक्तो नियमश्च यमोऽपरः ॥ २९ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता ।
यमोऽयं पञ्चधा प्रोक्तो नियमश्चाप्यथोच्यते ॥ ३० ॥

अक्रोधो गुरुशुश्रूषा शौचं सन्तोष एव च ।
आर्जवं चेति नियमः पञ्चधा परिकीर्तितः ॥ ३१ ॥

अहिंसा नाम यद्दुःखं परेभ्यो नोपपद्यते ।
आत्मवत्सर्वभूतानि यः पश्यति स आत्मवान् ॥ ३२ ॥

नापकारेऽपि किञ्चित्स्याद्दुःखमुत्पादितुं क्षमः ।
अहिंसेयं समाख्याता पुंसो धर्मजिगीषया ॥ ३३ ॥

आपत्स्वपि न यस्येत्थमलीके वाक् प्रवर्तते ।
तथ्येऽपि न भवेद्येन परेभ्यो दुःखमण्वपि ॥ ३४ ॥

तत्सत्यं मनसश्शुद्ध्यै धर्मवृत्तिस्थितात्मनाम् ।
नादत्तमादत्ते किञ्चिद्दत्तं वा न्यायतश्शुभम् ॥ ३५ ॥

दृष्टमप्यथ कस्याऽपि च्युतमेतन्निशाम्यतु ।
तृणवत्[1]मन्यतो धर्मी तदचौर्यमुदाहृतम् ॥ ३६ ॥

कर्मणा मनसा वाचा श्रवणाद्दर्शनादपि ।
मातृवन्मन्यते नित्यं प्रार्थयन्तीमपि स्त्रियम् ॥ ३७ ॥

दिव्यायामप्यलौल्येन य एवं वर्तते सदा ।
तस्य तद्ब्रह्मचर्यं स्याच्छेषा वृतविडम्बकाः ॥ ३८ ॥

---

१ तृणवन्मन्यते इति पाठभेदः ।

स्वच्छता समता प्रीतिरपकारशतैरपि ।
कालुष्यं नोत्सहेद्वोढुं सेयमुक्तेत्यकल्कता ॥ ३९ ॥

एते पञ्च यमाः प्रोक्ता यतीनां सुशिवात्मनाम् ।
प्रध्वस्तकलुषो नित्यं क्रुष्यमाणोऽपि भूरिशः ॥ ४० ॥

ताड्यमानोऽपि बलवत्प्रहृष्यति मुहुर्मुहुः ।
न कुप्यति कदाचिच्च सोऽक्रोधः परिभाष्यते ॥ ४१ ॥

देवानां ब्राह्मणानां च मातापित्रोश्च भक्तितः ।
वृद्धानामपि सर्वेषां सदाज्ञानुचरो भृशम् ॥ ४२ ॥

शुश्रूषेयं समुद्दिष्टा नियमो धर्मवृद्धये ।
मृदम्भसा सुपूतेन गन्धलेपापकर्षणम् ॥ ४३ ॥

गात्रप्रक्षाळनं शौचं स्थानासननिषेवणम् ।
अकुत्सितेषु संस्पर्शाच्छौचवृत्तिरनिन्दिता ॥ ४४ ॥

परिपूर्णेन चित्तेन निरारम्भं यदैव हि ।
लाभालाभे समौपम्यं स सन्तोष उदाहृतः ॥ ४५ ॥

जानन्नपि हि मेधावी जडवन्मूकवत्सदा ।
निवृत्तः परपीडायां श्रद्दधानश्च भावितः ॥ ४६ ॥

आर्जवं तस्य तत्प्रोक्तं नियमो नियमात्मनः ।
दानोपवासतीर्थानि कीर्तनावसथादयः ॥ ४७ ॥

धर्मस्य हेतवो दृष्टा धर्मिणश्च महात्मनः ।
प्रध्वस्तरजसा सत्त्वधर्मेणाऽऽच्छादितं तमः ॥ ४८ ॥

तदा बुद्धावधिष्ठाय भगवान् परमेश्वरः ।
ज्ञानेन योजयत्याशु धर्मानुक्रमतश्शनैः ॥ ४९ ॥

पञ्चात्मकमिदं सर्वं यत्किञ्चित्सचाराचरम् ।
एभ्यः परतरं नास्ति सिद्धोऽहमिति मन्यते ॥ ५० ॥

तत्तस्य साधकस्येष्टं ज्ञानं पञ्चात्मकं मतम् ।
निरूप्यमाणस्य यत्तत्सहसोत्पद्यते त्रयात् ॥ ५१ ॥

सङ्ख्यो वा लेशमाकर्ण्य दृष्ट्वा वा लिखितं सकृत् ।
अध्येयं वाऽथ संसिद्धो मन्यते भावितात्मवान् ॥ ५२ ॥

तन्मात्रेभ्यः परं नास्ति ज्ञानं तन्मात्रमुच्यते ।
इन्द्रियार्थात्परं ज्ञानं न भूतं न भविष्यति ॥ ५३ ॥

अस्मात्संयोगजज्ञानात्सिद्धोहमिति मन्यते ।
तज्ज्ञानं योगजं नाम भावितानां महामुने ॥ ५४ ॥

अन्योन्यकारणं ज्ञात्वा परमेतत्किमद्भुतम् ।
अस्मादेव समुत्पन्नं जगदेतच्चराचरम् ॥ ५५ ॥

तन्मन्यमानास्संसिद्धास्तज्ज्ञानं गुह्यमुच्यते ।
अहमिति प्रत्ययो यः परमात्मा स उच्यते ॥ ५६ ॥

कर्ता[१] हि क्रियते तस्य किङ्कृतं जगतो मया ।
स एवाहं विभक्तात्मा तज्ज्ञानं गर्व उच्यते ॥ ५७ ॥

योऽयमध्यवसायाख्यो जगतो हेतुरव्ययः ।
स परः परतस्तस्य नान्यदस्तीति कारणम् ॥ ५८ ॥

१. कः कर्ता इति पाठभेदः ।

अस्मात्त्वोधात्परा सिद्धिर्ज्ञानमध्यवसायजम् ।
गुणास्सर्वं जगन्मुख्या गुणा एव परं पदम् ॥ ५९ ॥

सिद्धोऽहमिति तज्ज्ञानं गौणं भावितचेतसः ।
प्रधानं पुरुषं केचिन्मन्यमानास्सुभाविताः ॥ ६० ॥

पञ्चविंशात्मकात्तत्त्वादन्यत्तत्त्वं न विद्यते ।
सा सिद्धिः परमा तस्य लोष्टवत्परिकीर्तिता ॥ ६१ ॥

तज्ज्ञानं पौरुषं सिद्धिस्साधकस्य न संशयः ।
एतदष्टविधं बौद्धं ज्ञानमुक्तं समासतः ॥ ६२ ॥

अन्येप्यभावमिच्छन्ति परमाणुं तथाऽपरे ।
नास्ति मर्त्यात्परं किञ्चित्केचित्स्वर्गात्परं न हि ॥ ६३ ॥

मन्यमानास्स्वभावोत्थवासनाभिः पृथक् पृथक् ।
रूपैस्सप्तभिरित्युक्ता दृष्टेऽर्थे साऽनुवर्तते ॥ ६४ ॥

बुद्धिर्ज्ञानेन या दृष्टे भावितस्य महाधियः ।
यस्यैवं संस्थितो भावस्स मुक्त इति घुष्यते ॥ ६५ ॥

मोक्षश्च प्रकृतेरन्यस्सुखदुःखविवर्जितः ।
स्वभाव इति वक्तव्यः पञ्चावयवलक्षण ॥ ६६ ॥

किन्तु बुद्धौ यदा पुंसो ज्ञानशक्तिर्विराजते ।
स्ववीर्यकिरणोपेता तदा पुंसः प्रवर्तते ॥ ६७ ॥

शिववक्त्राम्बुजोद्भूतममलं सर्वतोमुखम् ।
शिवत्वोन्मीलितं तथ्यमज्ञानतिमिरापहम् ॥ ६८ ॥

अनेन सिद्धाः पश्यन्ति यत्तत्पदमनामयम् ।
यन्न दृष्टं महामोहभावाज्ञानाकुलेक्षणैः ॥ ६९ ॥

ज्ञानमन्यत्स्वभावोत्थं भावितस्योपजायते ।
अनित्यमतिशोकाढ्यमैश्वर्यमसुखावहम् ॥ ७० ॥

मानुष्यं किमनेनेति जन्ममृत्युभयावहम् ।
त्यज[1] मोहं किमाश्चर्यं निस्सङ्गत्वात्सुखं वसेत् ॥ ७१ ॥

तदा ज्ञानवलात्तस्य बुद्धौ स परमेश्वरः ।
सुसूक्ष्मश्शक्तिमान् भूत्वा रजसोप्यथ योगतः ॥ ७२ ॥

सत्वेनोत्कृष्टवपुषं वुद्धिं क्षोभितवान् विभुः ।
साप्यणोर्ज्ञानयुक्तस्य विरक्तस्य विवर्तते ॥ ७३ ॥

वैराग्यगुणमाहात्म्यात्ज्ञानानुक्रमवर्तिनी ।
सहसा व्याधितं दृष्ट्वा जीर्णं वाऽप्यथवा मृतम् ॥ ७४ ॥

ततो विरागमायाति विपाकस्य महामुने ।
सन्तुष्टस्सर्वकार्येषु निस्पृहत्वाज्जुगुप्सति ॥ ७५ ॥

किमर्थं क्लिश्यते लोके पुत्रदारादिभिर्वृतः ।
नात्मानं पश्यते मूढो नष्टोऽयं रागपीडितः ॥ ७६ ॥

जुगुप्सा नाम सा दृष्टिर्नराणां भावितात्मनाम् ।
आध्यात्मिकेन दुःखेन वातपित्तकफादिना ॥ ७७ ॥

विरागः पीड्यमानस्य सहसा योऽभिजायते ।
स तेन वनमाश्रित्य वायुभुङ्नियतेन्द्रियः ॥ ७८ ॥

१ त्यजामोऽस्येति पाठभेदः ।

तुष्टोऽसौ लौकिकं त्यक्त्वा तुष्टिरध्यात्मिका हि सा ।
तस्करैः पुष्टिभिश्चैव राज्ञा चातिबलीयसा ॥ ७९ ॥

पीड्यमानस्य यद्दुःखं विरक्तस्तेन लौकिकात् ।
प्रपञ्चेऽसावथैवं स्यात् किमनेन मलीमसा ॥ ८० ॥

भोगेन परतन्त्रेण श्रेयोऽस्त्यन्यत्सुशोभनम् ।
एवं सञ्चिन्त्य विरतो गृहधर्मात्पराङ्मुखः ॥ ८१ ॥

तुष्टिश्चैवाभिभूतस्य भावितस्याऽधिभौतिकी ।
दिव्यैर्गृहादिभिर्भूतैरभिभूतस्य तत्क्षणात् ॥ ८२ ॥

यस्तापो भावितस्यैव तेन तस्माद्विरच्यते ।
बन्धुभिर्वार्यमाणोऽपि गृहं त्यक्त्वा वनं व्रजेत् ॥ ८३ ॥

सुखमस्मात्परं नास्ति मन्यमानस्सुभावितः ।
सन्तोषान्न परं लोके सुखमन्यत्प्रदृश्यते ॥ ८४ ॥

[illegible]नस्सन् भूयो भूयः प्रहृष्यति ।
तुष्टिस्सोक्ता विरक्तस्य ना[illegible] ॥ ८५ ॥

निस्स्वभावाभिभूतो यः परेषां (पश्य) सम्पदम् ।
महताऽपि प्रयत्नेन नार्थमाप्नोति दुःखितः ॥ ८६ ॥

प्राप्तं वा ह्रियते चोरैर्न च शक्नोति पालितुम् ।
पालनाद्बहवो दोषाः (क्षी) णादन्यत्समार्जितुम् ॥ ८७ ॥

नोत्सहेत्किमनेनेति दुःखायासकरेण तु ।
न चाराधयितुं शक्यो लोकोऽयं भिन्नमानसः ॥ ८८ ॥

कृतेऽप्याराधने नास्ति फलमल्पमपि क्वचित् ।
अस्माद्विरागात्सन्तुष्टः किञ्चित्क्षेत्रं समाश्रितः ॥ ८९ ॥

न च क्षेत्र[1]फलं नित्यं नित्यमन्यद्विरागतः ।
निर्[2]वा तुष्टिरियं प्रोक्ता नराणां भावितात्मनाम् ॥ ९० ॥

स्निग्धाद्वियुज्यमानस्य यदि मृत्युर्न जायते ।
स तेन पीडितोऽत्यन्तं किं मदीयेन पाणिना ॥ ९१ ॥

शरीरेणाऽतिपुष्टेन तं दृष्ट्वा हृष्टिमेति सः ।
स्नेहमूलानि दुःखानि न च स्नेहात्परं सुखम् ॥ ९२ ॥

क्षणिकं किमनेनाऽपि तस्माद्बन्धुरकारणम् ।
तदाऽसौ निर्दयो भूत्वा रुदन्नपि विहाय तु ॥ ९३ ॥

बन्धुवर्गाद्वनं गच्छेत्तस्मिन् मासे न हृष्यति ।
तुष्टिस्साऽभिहिता तन्त्रे भावितस्य प्ररोदिका ॥ ९४ ॥

विण्मूत्रपूरितं कोष्ठं बहिश्चर्मावकुण्ठितम् ।
दुर्गन्धीपूयकलुषं विचिन्त्य शनकैस्त्यजेत् ॥ ९५ ॥

अस्मादेव नवद्वारान्निष्क्रान्तोऽहं सुकिल्बिषात् ।
[illegible] कष्टं विडम्बोयं सुदारुणः ॥ ९६ ॥

विरक्तस्सहसा वृद्धो निस्सङ्गो यातंवात्स्यतः ।
स्तुष्टिः कामोद्भवा नाम भावितस्य महात्मनः ॥ ९७ ॥

स्वयमेव स्वकं कार्यं सबाह्याभ्यन्तरं शनैः ।
पुष्टमन्नेन सततं पानेन च विवर्धितम् ॥ ९८ ॥

---

२. नत्वा इति पाठभेदः ।
१. क्षेत्रात्परामिति पाठभेदः ।

दुर्गन्धं किल्बिषोपेतमनित्यमसुखावहम् ।
एकाहस्याप्यपायेन ग्लानिं वध्नात्यनात्मवान् ॥ ९९ ॥

चिरकालोपचारेऽपि कृते नास्त्युपकारता ।
तस्माद्विरक्तो लब्धाशी कांचिदाश्रित्य निम्नगाम् ॥१००॥

मृदंबुक्षालनासक्तस्तुष्टो ह्येवोपलक्ष्यते ।
सा तस्य क्षपिका नाम्ना तुष्टिर्भावात्मिका मता ॥ १०१ ॥

प्रतिग्रहभयादन्यत्सहसैव वियुज्यते ।
हिंसातो वाप्युपादानात्संयमेन्द्रियचाहिनी ॥ १०२ ॥

तुष्टिस्सन्तिष्ठते तस्य तुष्टिर्वैखानसात्मिका ।
एवं हि धातुवैराग्याद्धर्षोऽनन्तोऽभिजायते ॥ १०३ ॥

स्वभावो योऽथवाऽक्षाणां धार्यमाणेऽपि वर्तते ।
स्वभावेन पुमान् शुद्धस्तस्य किं प्रविचार्यते ॥ १०४ ॥

ज्ञानेनानेन सिद्धानां भावस्सञ्जायते परः ।
इन्द्रियार्थेषु नो शक्तिः प्रवृत्तिर्विरतिश्च न ॥ १०५ ॥

सन्तुष्टस्सर्वदा विद्वान् नित्याध्यात्मपरायणः ।
विरक्तस्सङ्गदोषाच्च ततस्तं प्रति कारणम् ॥ १०६ ॥

रजस्तमोभ्यां सम्प्रेर्य बुद्धिमैश्वर्यगोचरे ।
विरागे चास्य सहसा ध्यानोपाद्बलितस्य तु ॥ १०७ ॥

ऐश्वर्यमाप्नुयात्क्षिप्रं बुद्धितत्त्वव्यपाश्रात् ।
सत्त्वं तदाऽऽत्मभावेन संवृत्तमणुतां नयेत् ॥ १०८ ॥

अणुत्वमणुमात्रं स्याच्छरीरमपि तत्क्षणात् ।
येनासौ सहसा योगी गच्छन्नपि ततस्ततः ॥ १०९ ॥

स्थाणुभिर्न विधार्येत न च दृश्येत केनचित् ।
लघिमा नाम यः प्रोक्तो लघुत्वमुपजायते ॥ ११० ॥

समनोवेगस्सर्वात्मा न च पङ्कजलादिषु ।
निमज्जति कदाचित्स्यात् कण्ठकैश्च न बाध्यते ॥ १११ ॥

महत्वं सर्वलोकेषु कर्तुं शक्नोत्यवारितः ।
सिद्धैश्च पूज्यते नित्यं महाकायोऽथवा क्षणात् ॥ ११२ ॥

क्रीडित्वाऽप्यथवा तिष्ठेत् ब्रह्माद्यं सचराचरम् ।
स तस्य महिमा नाम तृतीयो योगिनो गुणः ॥ ११३ ॥

तृतीयं कार्यतस्सिद्धमैश्वर्यमणिमादिकम् ।
प्राप्त्यादयो गुणाः पञ्च योगिनां कारणात्मजाः ॥ ११४ ॥

यद्यदीप्सति योगीन्द्रो मनसाप्यथ तत्क्षणात् ।
सर्वमाप्नोत्यसन्देहादथवा यत्र रोचते ॥ ११५ ॥

प्राप्नोति तत्र तत्स्थानं प्राप्तिर्नाम गुणोऽव्ययः ।
युगपत्स्त्रीसहस्राणि रूपेणाऽप्रतिमानि तु ॥ ११६ ॥

निर्मातुमुत्सहेत्भोक्तुं विभज्यात्मानमादरात् ।
सुरतो हीयते नैव स्वेच्छाकामी रमेच्चिरम् ॥ ११७ ॥

तत्प्राकाम्यमिति प्रोक्तं यथेप्सितगुणावहम् ।
योगार्थाभिरमोघाभिरीशानीभिर्महाबलः ॥ ११८ ॥

अध्यवस्येशते कृत्स्नं ब्रह्माद्यं सचराचरम् ।
आज्ञानुवर्तिभिर्देवैः पूज्यते योगिसंविराट् ॥ ११९ ॥

क्रीडते सुरकन्याभिर्वृतश्चारुविलासिभिः ।
ईशित्वं नाम तत्प्रोक्तं तन्त्रे मुनिवरेश्वर ॥ १२० ॥

वशीकृत्य जगत्सर्वं बोद्धुं शक्नोत्यवारितः ।
भोक्तुं योगबलोपेतोप्यथवाऽऽच्छाद्य लीलया ॥ १२१ ॥

निर्मातुं स्थापयेदन्यां स्तैस्सार्धं वशवर्तिभिः ।
क्रीडत्यक्लिष्टविभवस्ताच्छिवत्वमुदाहृतम् ॥ १२२ ॥

यत्र यत्रेप्सते योगी तत्र तत्राऽनिवारितः ।
स्वेच्छाऽभिलाषितैर्भोगैर्न च सीदति कर्मणा ॥ १२३ ॥

प्रद्रवन्नपि मेधावी न परैरवसादितुम् ।
शक्यते योगसामर्थ्यान्न च कामोऽवसाद्यते ॥ १२४ ॥

यत्र कामावसायित्वं कीर्तितं गुणसन्ततौ ।
एतदष्टगुणोपेतमैश्वर्यं विनयोद्भवम् ॥ १२५ ॥

सांसिद्धिकं च देवानां तत्तद्वक्ष्याम्यतः परम् ।
पिशाचानां यथोद्दिष्टमणिमादिगुणाष्टकम् ॥ १२६ ॥

तदेव द्विगुणं प्रोक्तं राक्षसानां महात्मनाम् ।
स्वात्मीयैश्च सहैवोक्तं चतुर्विंशद्गुणात्मकम् ॥ १२७ ॥

यक्षाणां मुनिशार्दूल तदैश्वर्यमनिन्दितम् ।
द्वात्रिंशद्गुणमत्रोक्तमणिमाद्यष्टकं पुनः ॥ १२८ ॥

गन्धर्वाणां यतस्तेभ्यो यक्षेभ्यो बलवत्तरः ।
इन्द्राणामप्यथैश्वर्यं तत्तु त्रिंशद्गुणोत्तरम् ॥ १२९ ॥

भूयस्तदेव सोमानामणिमादिगुणाष्टकम् ।
स्वात्मनैवौजसा सिद्धं षडष्टकगुणोत्तरम् ॥ १३० ॥

चत्वारिंशद्गुणोपेतमैश्वर्यमणिमादिकम् ।
प्रजापतीनां विज्ञेयं स्ववीर्येणैव बृंहितम् ॥ १३१ ॥

चतुष्षष्टिगुणं बौद्धमैश्वर्यं ब्रह्मणस्स्मृतम् ।
येनाऽभिषिक्तो विश्वात्मा तत्वामृतसुशीकरैः ॥ १३२ ॥

प्रकरोत्यध्वसंस्थानं विमाननगराकुलम् ।
ऐश्वर्यमदमोहेन विषयेष्वभिसंप्लुताः ॥ १३३ ॥

क्षीयन्तेऽजस्रसंयुक्तास्स्वोचितस्य परिक्षयात् ।
विनश्वरेण सिद्धा ये योगेन च नरेश्वराः ॥ १३४ ॥

क्षरन्ति क्षीणभोगास्तु क्षीणाश्चाप्यत्र भोगिनः ।
कुले महति सम्भोगान् प्राप्य मोदन्त्यशङ्किताः ॥ १३५ ॥

तस्माद्भोगात्परं नास्ति ततस्ते मूढचेतसः ।
रागेण क्षिप्तचैतन्यास्सत्कर्मपरिवर्जिताः ॥ १३६ ॥

ततः प्रवर्तते बुद्धिः किञ्चिद्राजसमीलिता ।
प्रध्वस्तसत्वभावेन तमसाऽतीव भूरिणा ॥ १३७ ॥

परमेशकराघ्राता भोगनिद्राकुलान् प्रति ।
विवर्तमाना तरळा ह्यधर्मेणात्मवर्तिना ॥ १३८ ॥

ततोऽणोरतिमाहात्म्यात्प्रवृत्तिः परपीडने ।
हिंसातोलीकभाषित्वमस्माच्चौर्ये प्रवर्तते ॥ १३९ ॥

परदारेष्वनायासमतो गुर्वङ्गनागमः ।
अकार्यमतिदौर्भाग्यं क्रोधश्चाप्यनिवारितः ॥ १४० ॥

सतां व्यतिक्रमे प्रीतिरप्रीतिर्गुरुसन्ततौ ।
शौचहानिश्च सततं मतिदौःख्यं प्रमादतः ॥ १४१ ॥

अनार्जवं च सततमधर्माकुलितेक्षणः ।
ततोऽधर्मेण पुष्टस्य भोक्तुर्भोक्तृत्वलीलया ॥ १४२ ॥

प्रध्वस्तसत्वरजसा यदा बुद्धौ महेश्वरः ।
तमसा तु स वीर्येण नियुनक्ति तदा पशुम् ॥ १४३ ॥

अज्ञानतिमिरौघेण येन मूढो न पश्यति ।
सोपकाराय यत्किञ्चित्तस्यात्पश्चात्मके मतिः ॥ १४४ ॥

न च तन्मात्रजं ज्ञानं तमसाकुलितस्य तु ।
योगजं न च गुह्याख्यं न च गर्वोद्भवं तथा ॥ १४५ ॥

मौढ्येनाऽभिहतार्थस्य नष्टमध्यवसायजम् ।
गौणस्याऽपि तदाभावो न विजानाति पौरुषम् ॥ १४६ ॥

एवमज्ञानमोहेन न्यग्भूतस्याऽभिलाषिणः ।
न विरागोऽस्ति भोगेषु भूयोभूयोऽनुगम्यते ॥ १४७ ॥

बुद्धिस्तस्य समोपेता किञ्चिद्रागाऽनुवासिता ।
कारणप्रेरिता भोक्तुरवैराग्येण वर्तते ॥ १४८ ॥

न जुगुप्सोद्भवा तुष्टिर्न चैवाध्यात्मिका पशोः ।
भौतिकी[1] न तु भावोत्था न वै स्यादातिभौतिकी ॥ १४९ ॥

निस्वस्याऽपि तदाभावात्तुष्टिर्न स्यात्प्ररोदिका[2] ।
न च कामोद्भवस्तस्य क्षपको वा महामुने ॥ १५० ॥

ध्वस्तवैखानसः पश्चादतुष्टश्चाथ सर्वदा ।
भोगपङ्कनिमग्नस्य पशोर्बुद्धिर्महेश्वरात् ॥ १५१ ॥

चलिते शक्तिसङ्घातात्किञ्चित्सत्त्वविकासिता ।
रजसोद्गलितेनाशु तमसा पूरिता सती ॥ १५२ ॥

निवर्तते स्वभावेन ह्यविघातगुणात्मना ।
नाणिमा लघिमा वाऽपि महिमा च गुणो महान् ॥ १५३ ॥

कार्यं न वशमायाति कारणं चाप्ययोगिनः ।
अनैश्वर्यमलावेशात्प्रणष्टा प्राप्तिरंप्यतः ॥ १५४ ॥

अप्राकाम्यतयाविष्टो दुःखितः पुरुषाऽधमः ।
अनैश्वर्याच्च सततं सर्वकार्येषु जायते ॥ १५५ ॥

स्वात्मीयस्याऽपि देहस्य न शिवत्वं महामुने ।
प्राप्यार्थस्याप्यभावस्स्यात् किं पुनश्चाऽभिलाषते ॥ १५६ ॥

एवं सर्वेषु कार्येषु नरस्सीदत्यनीश्वरः ।
भावा बुद्धिसमुद्भूताः क्रमेणैवोपवर्णिताः ॥ १५७ ॥

---

१. नातिभौतिभवोत्थाना न चैवास्याऽऽधिदैविकी इति पाठभेदः ।
२. पुरोदिता इति पाठभेदः ।

ततः कालवशात्क्षीणे पुनरायात्यथोन्नतिम् ।
ऐश्वर्यं हि परा काष्ठा भोगिनो ह्यपरा मता ॥ १५८ ॥

अनेनैव मुनिव्याघ्र चक्रमेतद्गुरुत्तरम् ।
अष्टारं वर्णितं युक्त्या पुनर्वक्ष्याम्यतः परम् ॥ १५९ ॥

विशेषोऽस्ति समासेन साम्प्रतं मुनिसत्तम ।
मूढसंज्ञा विधर्माणो विधर्माऽभिरतास्सदा ॥ १६० ॥

प्रयात्यक्षीणकलुषास्सुघोरेषु महत्सु च ।
नरकेषु ततस्तेभ्यः कालेन बहुना मुने ॥ १६१ ॥

तिर्यक्भोगामृतं प्राप्य कारणेच्छानुरोधिनः ।
तेभ्योप्याशयसामर्थ्यान्नानाजात्यन्तखेदिताः ॥ १६२ ॥

प्राप्य मानुष्यतादीनां दरिद्राः क्लेशभागिनः ।
दुःखिता व्यधिता मूर्खास्सङ्कीर्णाश्च भवन्ति हि ॥ १६३ ॥

एवं जन्मसहस्रेषु ह्यतीतेषु कदाचन ।
भवन्ति धर्मिणश्शूद्राः प्रक्तनानुक्रमेण तु ॥ १६४ ॥

भ्राम्यमाणास्स्वधर्मोत्थवासनाभिस्ततोऽणवः ।
अष्टारस्य च चक्रस्य नान्तं पश्यन्ति दुःखिताः ॥ १६५ ॥

मतङ्गः ।

यादृक्कर्मवशाद्येन जन्मप्राप्तं महेश्वर ।
स बध्नाति रतिं तत्र नारतो भोक्तुमर्हति ॥ १६६ ॥

सर्वं तत्सुखभावेन मन्यमानस्तदा तदा ।
अनेनैव शरीरेण चिरं जीवितुमिच्छति ॥ १६७ ॥

प्रयत्नरूपया वृत्या शरीरं प्रति रक्षणे ।
यस्मादेव महादुःखं सर्वमेव सुखं सदा ॥ १६८ ॥

परमेश्वरः ।

मोहशक्तिनिरुद्धानां श्वयोनावपि निश्चयः ।
प्राप्तानां लक्षणे विप्र तत्सुखं प्रति मन्यसे ॥ १६९ ॥

क्षुत्पिपासादिकं तावन्महद्दुःखं न मन्यसे ।
सर्वापराधजं तस्य तस्मादप्यपरं महत् ॥ १७० ॥

जिह्वोपस्थवशात्तत्तज्जातीयैर्विनिहन्यते ।
तद्दुःखं मृष्यमाणस्य पुच्छच्छेदादिकं च यत् ॥ १७१ ॥

कण्टकेनाभिविद्धस्य तीव्रा भवति वेदना ।
किं पुनः कुन्दखड्गाद्यैर्भिद्यमानस्य यद्भवेत् ॥ १७२ ॥

अत्र किं बहुनोक्तेन शृणुष्वावहितोऽधुना ।
यन्निबद्धं ततोऽष्टाभिश्शरीरं हि शरीरिणः ॥ १७३ ॥

पशोः प्रकृतिना(स्त्री)भिः प्रतिपत्त्यात्मशीलया ।
गृहीतमात्मभावेन दुःखानामालयं परम् ॥ १७४ ॥

तेन नोत्सहते त्यक्तुं पीड्यमानोऽपि दुःखभाक् ।
तमश्शक्तिबलावेशादनात्मन्यात्मभावतः ॥ १७५ ॥

अणिमादिगुणोपेतो यः प्राप्तैश्वर्य आदरात् ।
रतिं बध्नाति विपुलां नातः परतरं सुखम् ॥ १७६ ॥

मन्यते मोहमाविष्टो शक्त्या स परमेष्ठिनः ।
शब्दादिविषयान्भोक्तुमुद्यतस्याऽभिलाषिणः ॥ १७७ ॥

---

१ न तद्दुःखमिति पाठभेदः ।

सहसोत्पद्यते श्रद्धा श्रुत्वा श्रोत्रेण वर्त्मना ।
तत्साधने परोत्साहस्स्वर्गेऽप्यप्सरसश्शुभाः ॥ १७८ ॥

भोक्ष्यामीत्युद्यतं चित्तं परा निष्ठा तपस्विनः ।
महामोहकरी पत्युश्शक्तिस्सर्वप्रसूतिका ॥ १७९ ॥

कृच्छ्रेण तपसा कालादभ्यासेन च योगिनः ।
धारणातस्सुखं तस्य व्यज्यते वा परैर्बलात् ॥ १८० ॥

हीयते योगसामर्थ्यात्तद्दुःखमतिदारुणम् ।
तामिस्रशक्तिवशगो न च प्राणान् परित्यजेत् ॥ १८१ ॥

आशाशक्त्यावृतोऽत्यन्तं तच्चैश्वर्यं न पश्यति ।
अथवाऽष्टगुणोपेतमैश्वर्यं प्राप्य भोगभुक् ॥ १८२ ॥

तुष्टिमायाति सहसा यावत्पश्यति संक्षयम् ।
तस्माद्वियुज्यते भोगाद्धा नष्टोऽस्मीति च ब्रुवन् ॥ १८३ ॥

बुभुक्षयाऽभिभूतस्य विश्वस्याऽपि तपस्विनः ।
क्लेशेन महता प्राप्तं भोक्ष्यामीत्युद्यतस्य यत् ॥ १८४ ॥

दुःखं तदपहारेण नेप्ससे केन हेतुना ।
कृतं तदन्धतामिस्रं प्रभावेन बलीयसा ॥ १८५ ॥

कर्माशयमनुप्राप्य रोधयित्री महात्मनः ।
शक्तीरोधयितुं शक्ता नेच्छन्तमपि पुद्गलम् ॥ १८६ ॥

कश्चिद्भोगाभिलाषेण कश्चित्स्नेहेन वा पुनः ।
कश्चिद्दाक्षिण्यसामर्थ्याज्जानन्नपि हि धार्यते ॥ १८७ ॥

कश्चिदज्ञानमोहेन कश्चित्कालानुरोधतः ।
कश्चित्कारणवैकल्याद्धार्यते च जगत्सदा ॥ १८८ ॥

निश्रेयसपदप्राप्त्यै मुक्त्वैकं परमेष्ठिनः ।
प्रसादं मुनिशार्दूलैवं मे निश्चिता मतिः ॥ १८९ ॥

बुद्धिर्गौणी प्रवृत्ता त्रिगुणगुणमयोद्धारभारं वहन्ती
वीर्येणात्युद्भणैषा जगदिदमखिलं भावयन्त्यात्मवृत्त्या ।

सेयं संक्षेपवृत्त्या विवृतगुणगणाकीर्णसम्पद्विभक्ता
कारो नाम्नाऽपरोऽयं स्वविभवविमलानुक्रमेणैव वाच्यः ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
बुद्धिपटलस्समाप्तः ।

---

## अथ अहङ्कारपटलः ।

अथ बुद्धेर्विकारो यस्स्वभावाद्व्यतिरिच्यते ।
स्वभावोऽध्यवसायाख्यः प्रकृतिस्सोऽच्यते यतः ॥ १ ॥

विकारश्चाऽभिमानाख्यस्तच्च तत्वमनिन्दितम् ।
स्वसूतेरुच्यते योनिः कारणं तत्वसङ्करात् ॥ २ ॥

स्वाऽभिप्रायेण तीव्रेण विकिरत्यखिलं जगत् ।
स त्रिधा भेदमापन्नो यस्माद्गुणमयो महान् ॥ ३ ॥

महतश्च समुद्भूतो वृत्तिभिस्तेन चोच्यते ।
स्वरूपं धर्मिणस्तस्य धर्मो वृत्तं स्वकं ध्रुवम् ॥ ४ ॥

अहमिति प्रत्ययो यस्सर्वभूतेष्ववस्थितः ।
पञ्चधा स तु विज्ञेयस्तन्त्रेऽस्मिन् कारणोदिते ॥ ५ ॥

अहं श्रोता मयाऽवश्यं श्रोतव्यं गेयमादरात् ।
तस्याः कमलनेत्रायास्स्प्रष्टव्यं स्तनयुग्मकम् ॥ ६ ॥

स्प्रष्टाऽमिति कोऽन्योऽस्ति तां समर्थोऽपगूहितुम् ।
द्रष्टाऽहमिति भावेन द्रष्टव्येन्दुमुखी मया ॥ ७ ॥

रसोऽवश्यं विलासिन्या मयाऽऽस्वाद्योऽप्रयत्नतः ।
यतस्स्वादयिताऽत्यन्तमहमेवं किमद्भुतम् ॥ ८ ॥

नीलोत्पलनिभश्चास्यास्तन्वङ्ग्या यो मयाऽधुना ।
आघ्रेयस्स किमाश्चर्यं यतो जिघ्रामि तां त्वहम् ॥ ९ ॥

क्रियापञ्चकमन्यस्य वृत्तमस्योचितं ध्रुवम् ।
वक्तव्यमिति तत्रैकं क्रमादेयं परं मुने ॥ १० ॥

गन्तव्यं हि तृतीयं स्यादुत्स्रष्टव्यमतः परम् ।
तथाऽऽनन्दयितव्यं स्यात्पञ्चमीयं क्रिया मते ॥ ११ ॥

या सा ज्ञानक्रिया शक्ता भोक्तुस्सोन्मीलितास्सती ।
लक्ष्यते मुनिशार्दूल वृत्तैरेभिस्स्वकैस्स्वकैः ॥ १२ ॥

अहङ्कारसमायोगज्ञानसत्ता विकासते ।
सत्वेनोन्मीलिता क्षिप्रं रजश्चाऽऽश्रित्य वेगतः ॥ १३ ॥

शब्दादिविषयान् प्राप्य तमसा सा निवर्तते ।
क्रियासत्ता तथैवं स्यात्पाशादिभिरनिन्दिता ॥ १४ ॥

गुणाधारसमायोगादहङ्कारेण सादरम् ।
विकरोति मुनिव्याघ्र कर्तृत्वेन यशस्विनी ॥ १५ ॥

ममैषा महिषी भद्रा ममैतद्विपुलं पुरम् ।
मद्दत्तं प्रतिगृह्णीष्व मत्तश्शीघ्रतरो मृगः ॥ १६ ॥

मां कश्चिन्न विजानाति नास्ति मे निश्चितं मनः ।
तुष्टे मयि न भेतव्यं नाहं गच्छामि सागरम् ॥ १७ ॥

अस्मभ्यं पृथुवासांसि ह्येतद्भावाष्टकं मतम् ।
सत्वेनापूरितस्यास्य व्यज्यते निर्मलं मनः ॥ १८ ॥

इन्द्रियार्थेषु पाटव्यं तच्च गव्यात्प्रवर्तते ।
विस्पष्टं शब्दविषयं श्रोत्रवृत्तमुदाहृतम् ॥ १९ ॥

त्वचश्च स्पर्शनं वृत्तं चक्षुषश्चापि दर्शनम् ।
पाटवं स्वादने ज्ञेयं जिह्वाया वृत्तमेव तत् ॥ २० ॥

घ्राणस्याघ्राणनं वृत्तं पञ्चकं यत्सुनिर्मलम् ।
ज्ञानशक्तिबलोपेतं पाटवं स्यात्स्वकं स्वकम् ॥ २१ ॥

वक्तव्यपाटवं वाचो दानादानञ्च हस्तयोः ।
गमनं पादयोर्ज्ञेयं पायोरुत्सर्जनं मतम् ॥ २२ ॥

पाटवञ्चाप्युपस्थस्य सुखं वृत्तमुदाहृतम् ।
क्रियाशक्तिबलोपेतं पञ्चकं स्यात्सुनिर्मलम् ॥ २३ ॥

तमसा भूरि सम्पृक्ता नष्टसत्वरजास्तथा ।
भोक्तुर्ज्ञानक्रिया शक्ता प्रसुप्ता चैव लक्ष्यते ॥ २४ ॥

तदा गर्वस्य माहात्म्यं प्रध्वस्तकरणं शनैः ।
चित्ते लीनं करोत्यन्तः दुःखमाशयजं पशोः ॥ २५ ॥

एषा शक्तिरिति ज्ञेया तस्या वक्ष्यामि लक्षणम् ।
मानसापाटवो मौढ्यं सङ्कल्पश्चाप्यपाटवम् ॥ २६ ॥

ध्वस्तस्तत्तमसा यस्मात्तस्मान्मूढे तु नायके ।
शेषोऽयं परिवारोऽस्य सोऽतिमूढतरस्तदा ॥ २७ ॥

किन्तु स्वाशयमाहात्म्याद्भागशोऽवसरागतः ।
भोक्तव्यं भोगिनो यस्मात्तस्मात्सर्वं न सर्वदा ॥ २८ ॥

न सर्वत्र क्वचित्किञ्चित्सर्वमेतत्क्वचित्क्वचित् ।
अपाटवमशक्त्याह्वं तत्ते वक्ष्याम्यतः परम् ॥ २९ ॥

शिवशक्तिकरावेशाच्चलितस्याभवच्छनैः ।
रजःप्रणष्टसत्वं स्यादतिरिक्तं तमोऽखिलम् ॥ ३० ॥

तदा गर्वपरीवारो न क्वचित्तासु वृत्तिषु ।
प्रवर्तते मुनिव्याघ्र हतव्यापारगोचरः ॥ ३१ ॥

श्रोत्रेन्द्रियस्य काठिन्यं त्वचः कौष्ठ्यं प्रजायते ।
जायते चक्षुषोऽन्धत्वं जिह्वायां जडता तथा ॥ ३२ ॥

घ्राणेन्द्रियस्य चाघ्रात्वं मौक्यं वागिन्द्रियस्य च ।
कुणित्वं हस्तयोर्ज्ञेयं पादयोः पङ्गुता स्मृता ॥ ३३ ॥

गुदावर्तः स्मृतः पायोरुपस्थस्याप्यथोच्यते ।
क्लैब्यमेषां प्रवक्तव्या ह्यशक्तिर्मुनिपुङ्गव ॥ ३४ ॥

---

१. प्रध्वस्ततमसा यस्मादिति पाठभेदः ।

सर्वात्मना निषण्णोऽयं स्थावराणां यतस्ततः ।
तमसोत्कृष्टवीर्येण योगेन कमलात्मनः ॥ ३५ ॥

सिसृक्षोः परमे[1] जाता मुख्यास्तेन प्रकीर्तिताः ।

मतङ्गः ।

स्थावरांश्चेतनानेके वदन्त्यन्येप्यचेतनान् ॥ ३६ ॥

संशयं कुरुते तद्धि च्छिन्धि ज्ञानासिना प्रभो ।

परमेश्वरः ।

ऋतुमद्भावसंयुक्ताः पादपास्तरवो यतः ॥ ३७ ॥

पुष्ट्यर्थं स्वाभिलाषेण पिबन्त्यम्बु यतः क्षितौ ।
म्रियन्ते च निराहारास्तरवो मूढचेतसः ॥ ३८ ॥

अन्योन्यमुपकारेण जङ्गमास्स्थावरैस्सह ।
लक्ष्यन्ते चेतना वृक्षा द्रव्यलोभाच्च सादरम् ॥ ३९ ॥

किञ्च तेनानुमानेन त्वहङ्कारेण संस्थिताः ।
प्रध्वस्तशक्तयस्तस्माल्लुप्तसंज्ञा निरिन्द्रियाः ॥ ४० ॥

पापेन महता विद्धा यान्त्यन्ये मूढचेतसः ।
अनुमानं न सर्वत्र जङ्गमेष्वपि दृश्यते ॥ ४१ ॥

ब्रह्मादिस्थावरान्तानामन्योन्यापेक्षयाऽऽदरात् ।
न च संदृश्यते ज्ञानं तस्मादनियमो ह्ययम् ॥ ४२ ॥

तत्वधर्मस्त्रिधा तावदहङ्कारस्य सुव्रत ।
वैकारिकस्तैजसश्च भूतादिरितरोऽपि च ॥ ४३ ॥

---

१ प्रथमे इति पाठभेदः । २. शक्तय इति पाठभेदः ।

सत्वेनोत्कृष्टवीर्येण गर्वो वैकारिकस्स्थितः ।
रजसा भूरिसम्पृक्तस्तैजसः परिकीर्तितः ॥ ४४ ॥

भूतादिस्तमसोत्कृष्टस्तेषां वक्ष्यामि वृत्तयः ।
रजस्तमोभ्यामाक्रम्य वलं सम्यक् प्रवर्तते ॥ ४५ ॥

ईषद्रजस्समायोगाद्विकारैस्स्वैरनिन्दितः ।
वैकारिकोऽक्षसेनायां कारणं योनिरुच्यते ॥ ४६ ॥

योनिस्तन्मात्रसङ्घस्य यदा सम्यक् प्रवर्तते ।
तदा बलं समाक्रम्य यथावन्मुनिपुङ्गव ॥ ४७ ॥

रजसस्सहजत्वेन किञ्चित्तमस ईरणात् ।
अन्योन्यजनकास्त्वेते जगत्यस्मिन् सिताऽसिते ॥ ४८ ॥

गुणागुणमयं सर्वं जगत्स्थावरजङ्गमम् ।
संक्षुब्धः कारणेच्छातो यदा गर्वस्तु सात्विकः ॥ ४९ ॥

तदा संघृष्य ते द्वेऽन्ये मिथुनं सम्प्रवर्तते ।
मिथुनं जायते गर्वान्मनश्चैवोभयात्मकम् ॥ ५० ॥

द्वे कोटी मनसस्सिद्धे शुद्धाऽशुद्धा च साधने ।
सङ्कल्पेन सरागेण स्फुरद्वीर्येण वेगवत् ॥ ५१ ॥

विनिष्क्रम्याक्षिमार्गेण प्रेरयित्वा तदिन्द्रियम् ।
अर्थेन सह संयोज्य सरागञ्च निवर्तते ॥ ५२ ॥

याऽस्य रागोज्झिताऽवस्था मनसोऽतीव निर्मला ।
तया संयुज्यते योगे परे सङ्कल्पितात्मवान् ॥ ५३ ॥

---

१. प्रत्यन्तरेषु नास्ति ।

शुद्धाऽशुद्धविभागोऽन्यो दि[1]व्यभूतिप्रसाधने ।
येन सङ्कल्प्य सङ्कल्प्य लक्षमभ्यासतो भवेत् ॥ ५४ ॥

तदासन्नतमं चित्तमिन्द्रियेभ्योऽस्मितात्मनः ।
येनात्मवर्तिना नित्यमभिमानेन गर्वितः ॥ ५५ ॥

बुद्धीन्द्रियाणामुत्पत्तिं येन बुध्यति भोगभुक् ।
श्रोत्रं श्रवणधर्मित्वात्प्रतिगृह्णाति स्वोचितम् ॥ ५६ ॥

विषयं शब्दनामानं व्यक्तं वाऽव्यक्तमेव वा ।
तदध्यात्ममिति ख्यातं श्रोतव्यमतिभूतता ॥ ५७ ॥

विहिता कारणेनात्र दिशस्तत्राधिदेवताः ।
त्वगिन्द्रियमथोत्पन्नं स्पर्शोऽस्य च महामुने ॥ ५८ ॥

विषयस्सर्वदा ज्ञेयश्शीतोष्णमृदुकर्कशः ।
त्वगिन्द्रियं चाप्यध्यात्मं स्पृष्टव्यमतिभूतता ॥ ५९ ॥

तस्याधिदेवता सिद्धो मातरिश्वा महाबलः ।
तस्माद्वैकारिकाद्गर्वादुत्पन्नं चक्षुरिन्द्रियम् ॥ ६० ॥

विषयोऽस्य स्मृतं रूपं वर्णाकृतिप्रमाणतः ।
चक्षुरध्यात्ममेवं स्याद्दृष्टव्यमधिभूतता ॥ ६१ ॥

सूर्योऽधिदेवता प्रोक्ता तन्त्रेऽस्मिन् पारमश्वरे ।
जिह्वेन्द्रियमथो व्यक्तं विषयोऽस्य रसस्सदा ॥ ६२ ॥

कट्वाम्ललवणादीनि प्रतिगृह्णात्यसंशयः ।
आध्यात्मं रसनं प्रोक्तमास्वाद्यमधिभौतिकम् ॥ ६३ ॥

---

१. रुद्रभूति इति पाठभेदः ।

तत्रापि हि विजीनायाज्जलाध्यक्षोऽधिदेवता ।
घ्राणमिन्द्रियमित्युक्तं गन्धोऽस्य विषयस्सदा ॥ ६४ ॥

स च पूतिर्यथान्यायमुग्रं तीव्रतया तथा ।
क्वचित्सुरभिमाह्लादं यथावत्प्रतिगृह्यते ॥ ६५ ॥

घ्राणमध्यात्ममेवोक्तमाघ्रेयमतिभूतता ।
पृथिवी देवता तत्र बोद्धव्या शास्त्रचिन्तकैः ॥ ६६ ॥

स्वं स्वं वृत्तमथोपात्तं प्रतिगृह्णन्ति देवताः ।
न जानात्युदितान् स्वात्म्यान् वृत्तमन्यतमं क्वचित् ॥ ६७ ॥

दिदृक्षेत्यखिलं प्रोक्तं यतस्तेभ्यो विशिष्यते ।
तस्माद्वैकारिकादेव गर्वात्कर्मेन्द्रियाण्यपि ॥ ६८ ॥

व्यक्तिमायान्ति संक्षोभात्सिसृक्षोः कारणात्मनः ।
वागिन्द्रियमिति ख्यातं वक्तव्येति क्रिया सदा ॥ ६९ ॥

या वर्णपदवाक्यैस्तु परत्र विनिवेदिता ।
विधिस्तुतिर्जुगुप्साद्यैर्विकारैः प्रतिकुर्वते ॥ ७० ॥

सेयमध्यात्ममुद्दिष्टं वक्तव्यमतिभूतता ।
देवता हुतभुक् प्रोक्ता सा च वायुसमीरणात् ॥ ७१ ॥

वक्त्रहृत्कण्ठताल्वोष्ठपुटयोगेन नाभितः ।
समुत्था या तु जिह्वाग्रे व्यक्तीभावमुपैति हि ॥ ७२ ॥

---

१. उक्तादन्यतममिति पाठभेदः । २. न द्रष्टे इति पाठभेदः ।
३. भोक्ता इति पाठभेदः ।

हस्तेन्द्रियं समाख्यातं दानादानादिकं क्रिया ।
हस्तमध्यात्मसुद्दिष्टमादेयाद्याधिभौतिकम् ॥ ७३ ॥

इन्द्रोऽधिदेवता विप्र विहिता शूलपाणिना ।
पादावेवाक्षमित्युक्तं तच्चाध्यात्मं महामुने ॥ ७४ ॥

क्रियाऽधिभौतिकं तत्र तत्प्रोक्तं गमनादिकम् ।
केशवो विहितस्तत्र स च प्रोक्ताऽधिदेवता ॥ ७५ ॥

पायुः कर्मेन्द्रियं तस्य ह्युत्सर्गे चोदिता क्रिया ।
अध्यात्मं पायुरेवोक्तमुत्सर्गश्चाऽधिभौतिकः ॥ ७६ ॥

मित्रोऽधिदेवता प्रोक्ता पायोर्मुनिवरोत्तम ।
उपस्थं पञ्चमं प्रोक्तमिन्द्रियं सृष्टिकारणम् ॥ ७७ ॥

तस्योचितो क्रियानन्दो वृत्तमत्रोदितं मया ।
उपस्थेन्द्रियमध्यात्ममानन्दश्चाऽऽधिभौतिकम् ॥ ७८ ॥

प्रजापतिरिरिति ज्ञेया देवतात्वेन तत्र तु ।
इन्द्रियाणि दशैकं च वर्तनं समुदाहृतम् ॥ ७९ ॥

इन्द्रियं यत्पुरा प्रोक्तम्मनश्चात्रोभयात्मकम् ।
विषयस्तस्य सङ्कल्पस्सोमश्चास्याऽधिदेवता ॥ ८० ॥

द्विधाऽधिकारि तच्चित्तं भोक्तुर्भोगोपपादकम् ।
बहिःकरणभावेन स्वोचितेन यतस्सदा ॥ ८१ ॥

इन्द्रियाणां तु सामर्थ्यं सङ्कल्पेनात्मवर्तिना ।
करोत्यन्तस्स्थितं भूयस्ततोऽन्तःकरणं मतम् ॥ ८२ ॥

मनो गर्वस्तथा बुद्धिर्द्वारमेतत्सदात्मनः ।
भूतये भूतनाथेन निर्मितं कारणं त्रिधा ॥ ८३ ॥

अहङ्कारस्तथाऽध्यात्ममभिमानं स्वकं ध्रुवम् ।
आधिभौतिकमेवोक्तं रुद्रस्तस्याऽधिदेवता ॥ ८४ ॥

बुद्धिरध्यात्मभावेन स्वभावेनैव संस्थिता ।
बोद्धव्यमधिभूताख्यं तत्र ब्रह्माऽधिदेवता ॥ ८५ ॥

बाह्यार्थग्रहणे भोक्तुर्द्वारमेतदुदाहृतम् ।
यदन्तःकरणं नाम त्रिकालविषयं मतम् ॥ ८६ ॥

अतोऽवसीयते यस्माच्चिरकालात्[1]मसञ्ज्ञितम् ।
भोक्तुं स्मारयितुं शक्तमाशयं प्रत्ययात्मकम् ॥ ८७ ॥

वर्तमानमतीतं च यच्चैष्यदनुमानतः ।
वर्तमानं बहिर्देवाः प्रेरिता मनसा यदा ॥ ८८ ॥

तदा गृह्णात्यनायासं स्वोचितं यत्क्रमागतम् ।
विकासस्स्वत्वसामर्थ्यात्प्रवृत्तिश्च रजोमयी ॥ ८९ ॥

प्रतीपागमनं ग्राह्ये यदेतत्तमसा स्मृतम् ।
गृहीतोऽर्थोऽभिनानेन ख्यातिरध्यवसायिनी ॥ ९० ॥

निवेदयन्ती विद्यायां विद्यया वेदते पुमान् ।
इत्येषोऽनुक्रमः प्रोक्तो भोक्तुर्भोगप्रवृत्तये ॥ ९१ ॥

प्रत्यागतानामर्थानां ग्राहकः परिकीर्तितः ।
देवाश्चापि विकुर्वाणा बोद्धारो बुद्धिसंज्ञकाः ॥ ९२ ॥

---

१. त्नु इति पाठभेदः ।

प्राप्नुवन्ति स्वकात्स्थानान्मनस्सङ्कल्पितास्सदा ।
कर्माख्याः कर्मनिरताः कर्तुः कारणसैनिकाः ॥ ९३ ॥

साहित्येन निबद्धास्तु यतस्तस्याभिलाषिणः ।
उद्यतस्याप्यथैकस्मिन्नर्थे ह्याकुलतां ययुः ॥ ९४ ॥

तस्यार्थं प्रतिकुर्वन्ति सङ्घातेन महामुने ।
विकृष्टं बुद्धिदेवानां सन्निकृष्टं क्रियात्मनाम् ॥ ९५ ॥

सिध्यत्यन्योन्यसङ्घातान्नान्यथा तु कदाचन ।
येषां नात्मेति वचनं तेषामभ्युद्यतः क्रमात् ॥ ९६ ॥

एकैकस्यैकमेकं स्याद्विज्ञानं सुप्रतीयते ।
समस्तं यस्य तज्ज्ञातुस्सोऽस्मिन्नास्त्यस्फुटं वचः ॥ ९७ ॥

भूतादेरप्यहङ्कारात्तन्मात्राणि भवन्ति हि ।
तमसोत्कृष्टवीर्येण यदा सत्वं रजस्तथा ॥ ९८ ॥

अभिभूतेषु संघृष्य मिथुनाच्चाभवत्तदा ।
लेशानुविद्धं रजसा तमस्तत्र विजृम्भते ॥ ९९ ॥

तेन तत्करणं न स्यान्मूढत्वात्कार्यतां गतम् ।
कारणस्थितये सिद्धं सैमाश्रित्य विचेष्टते ॥ १०० ॥

अभवच्छब्दतन्मात्रं सूक्ष्मं नैवोपलक्ष्यते ।
वक्तव्यं ते मुनिव्याघ्र पुरस्तात्सुविचार्य तु ॥ १०१ ॥

---

१. एकस्यार्थमिति पाठः । २. यदाश्रित्य इति पाठभेदः ।

तन्मात्रशेषश्शब्दात्थों विनिवृत्यर्थमुच्यते ।
अतोऽन्यत्स्पर्शतन्मात्रं किं चिच्छब्दसमन्वितम् ॥ १०२ ॥

रूपतन्मात्रमप्येवं शब्दस्पर्शसमायुतम् ।
ततोऽन्यद्रसतन्मात्रं प्रागुक्तत्रितयान्वितम् ॥ १०३ ॥

गन्धतन्मात्रमप्येवं चतुष्टयसमन्वितम् ।
तन्मात्राण्यतिसूक्ष्माणि भूतेभ्योऽनुपलब्धितः ॥ १०४ ॥

कार्यतः कारणं सिद्धं कार्यं स्यात्ख्यातिपञ्चकम् ।
कार्यत्वं कारणत्वं च तन्मात्राणां प्रकीर्तितम् ॥ १०५ ॥

नोपात्तं करणत्वं स्यात्करणानि त्रयोदश ।
इन्द्रियाणि दशैकं च गर्वो बुद्धिश्च सुव्रत ॥ १०६ ॥

तत्वधर्मोऽहङ्कृतश्च सेन्द्रियस्योपवर्णितः ।
तन्मात्रस्य स्थितिश्चास्य तन्मात्रेण सहाधुना ॥ १०७ ॥

कथ्यते रुद्रवर्गस्य विभागोऽनुक्रमान्वितः ।
श्रीकण्ठानुमतास्सन्तो ये रुद्रा भुवनेश्वराः ॥ १०८ ॥

तेषां स्थानानि दिव्यानि नानारत्नोज्वलानि तु ।
स्थूलेश्वरमतः पूर्वं स्थानं मूर्धन्यवस्थितम् ॥ १०९ ॥

चारुचामीकरप्रख्यं स्थानमन्यत्स्थलेश्वरम् ।
शङ्कुकर्णमतोऽधस्तात्तस्मात्कालंजरं स्मृतम् ॥ ११० ॥

---

१. शब्दश्शेषार्थ इति पाठः । २. तन्मात्रैस्सहितस्याऽस्य इति पाठभेदः ॥

मण्डलेशं च माकोटंद्विरण्डमपरं ततः ।
च्छगलण्डं च विख्यातं स्थानं मुनिवरोत्तम ॥ १११ ॥

स्थानान्येतानि रुद्राणां भुवनैर्निचितानि तु ।
तेषां स्वपरिभाषाभिः क्षेत्राण्यत्र स्थितानि तु ॥ ११२ ॥

निगूढकिरणास्सूक्ष्मा रुद्राः क्रीडन्त्यनिन्दिताः ।
तन्मात्रेष्वथ ये रुद्रा योगैश्वर्यबलान्विताः ॥ ११३ ॥

क्रीडन्त्यक्लिष्टकर्माणस्तेषां नामानि मे शृणु ।
विश्वदेवो विरूपाक्षो सहिष्णुर्विभुरेव हि ॥ ११४ ॥

मनोवेगश्च विख्यातस्सूक्ष्माचारगुणान्विताः ।
येभ्यो य उचितास्तत्र तेषां संख्या न विद्यते ॥ ११५ ॥

सर्वज्ञास्सर्वकर्तारस्स्वेच्छारूपविधायकाः ।

तत्त्वं मया कारणकार्यभेदा-
त्सूक्ष्माक्षयुक्तं विधिनोपदिष्टम् ।
तच्चान्वयानन्वयधर्मसंस्थं
भूतान्यथो विस्तरतश्शृणुष्व ॥

इति श्रीमतन्त्रपारमेश्वरे विद्यापादे
अहङ्कारपटलस्समाप्तः ।

---

# अथ आकाशपटलः ।

अथ भूताधिकारोऽयं प्राप्तो न्यायेन सांप्रतम् ।
वर्णयिष्ये तथा तेभ्यस्तन्मात्रेभ्यो विनिर्गतः ॥ १ ॥

भूतानां पञ्चकं सिद्धं क्षोण्यन्तं खपुरस्सरम् ।
स्थितये सर्वभूतानां शरीराण्यसृजत्पुरा ॥ २ ॥

ततोऽभिध्याय विश्वात्मा ब्रह्मा लोकपितामहः ।
पानान्नशयनाधारस्थानासनाविसर्पणे ॥ ३ ॥

स्थूलानि तद्विशिष्टानि सृष्टवान् भूतनायकः ।
विशेषाः क्रमशो व्यक्ता धातुर्योगबलेरणात् ॥ ४ ॥

लोकत्रयविभूत्यर्थं तदूर्ध्वं सूक्ष्मजानि तु ।
ततस्ते योगिनो देवास्सूक्ष्मदेहा ह्यनिन्दिताः ॥ ५ ॥

विचरन्ति महात्मानश्शुद्धाधारक्रियान्विताः ।
आकाशं शब्दतन्मात्रादवकाशत्वलक्षणम् ॥ ६ ॥

व्यक्तं व्यक्तिकरं विप्र पृथक्संस्थानसिद्धये ।
भूतानां भुवनानां च गत्यर्थं चाध्वसन्ततौ ॥ ७ ॥

तच्छब्दगुणसामर्थ्यात्सिद्धं यस्मात्तदाश्रितः ।
शब्दोऽभिव्यक्तिमायाति नान्यथा मुनिपुङ्गव ॥ ८ ॥

नासतश्च प्रसिद्धं स्यात्तच्च वस्तुसमाश्रयात् ।
स्थाणवभावाद्यथा चित्रं न क्वचित्संप्रदृश्यते ॥ ९ ॥

शब्दस्याऽपि ततोऽस्तित्वादाकाशं गुणवत्सदा ।
तच्चाऽपि शब्दतन्मात्राद्व्यक्तं सम्प्रति लक्ष्यते ॥ १० ॥

संहारे तु प्रणष्टं स्याद्योगिनं प्रति निश्चितम् ।
येनाऽवकाशकं वस्तु न किञ्चिदपि विद्यते ॥ ११ ॥

ध्वस्ते व्यापारनिलये प्रलीनस्य तदात्मनः ।
न चास्यात्यन्तिको भावो न चोत्पत्तिरिहेष्यते ॥ १२ ॥

नित्यत्वान्मुनिशार्दूल स तथाऽप्युपचर्यते ।
नेत्रोत्पाटाद्यथा पुंसो रूपाभावस्सुनिश्चितः ॥ १३ ॥

न चाभावोऽस्ति रूपाणां शुक्लादीनां दृगात्मनाम् ।
न्यक्भूतकरणत्वाच्च चलतश्चाऽखिलानि तु ॥ १४ ॥

व्यक्तिमायान्ति तत्वानि रचनाश्च पृथग्विधाः ।
प्रतिसञ्चरतः पुंसः प्रध्वस्तान्युपचारतः ॥ १५ ॥

शेषाणां स्थितये सन्ति किमाश्चर्यं महामुने ।
किन्तु बाह्याध्वसंहारात्सर्वं नाशमुपैति हि ॥ १६ ॥

प्रणष्टस्यास्य जगतस्तमसा पूरितस्य हि ।
किमपेक्ष्य सदाकाशमस्ति चेत्किमतः परम् ॥ १७ ॥

वक्तव्यमुचितस्याऽपि मुह्यसे केन हेतुना ।
अपेक्ष्योच्चं ततो निम्नं निम्नतश्चाप्यथोच्छ्रितम् ॥ १८ ॥

लोकेऽपि सुप्रतीतस्स्याद्यथा च सुखदुःखयोः ।
प्रवृत्तयः प्रपञ्चेऽस्मिन् उपलब्धिः परस्परम् ॥ १९ ॥

एवंविधं तदाकाशं सिसृक्षोः परमेष्ठिनः ।
व्यक्तं तच्छब्दतन्मात्रात्तन्मात्रं समुदाहृतम् ॥ २० ॥

न चाधाराहृते किंचिद्वस्तु स्वाश्रयतास्स्थितम् ।
तन्मात्राणीह घटवद्विशेषाश्च प्रलेपवत् ॥ २१ ॥

ध्वस्ते पञ्चात्मके पिण्डे सति पुर्यष्टके पशोः ।
शक्यते घटितुं भूतैः नान्यथा धारकादृते ॥ २२ ॥

एतावद्दशधा कार्यं शरीरं सर्वदेहिनाम् ।
यसत्माश्रित्य करणं भोक्तुर्भोगोपपादने ॥ २३ ॥

समर्थं सर्वकार्येषु कर्तृत्वे ह्यजुगुप्सितम् ।
पुर्यष्टकसमायोगात्पुंसः कर्मानुरूपता ॥ २४ ॥

देहाद्देहान्तरप्राप्तिः पित्रोस्संयोग एव हि ।
भूतानां चोपभुक्तानां रेतस्तत्परिणामजम् ॥ २५ ॥

ऋतुकालमनुप्राप्य तद्बीजादुपबृंहितम् ।
कललं जायते यस्माद्भूयो बुद्बुदतां व्रजेत् ॥ २६ ॥

शोणितन्तु ततो भूयाच्चर्ममांसाङ्कुराश्शनैः ।
अन्नपानोपयोगेन मातुर्निश्वसितेन च ॥ २७ ॥

धात्र्यम्भोऽग्निमरुद्व्योम्नां संयोगाद्व्यक्तिमेति हि ।
प्रादुर्भवन्त्यथाङ्गानि वर्धन्ते च शनैश्शनैः ॥ २८ ॥

भूतान्येव विपक्वं तच्छुक्लं वृद्धिमुपैति हि ।
लोमानि मांसं रक्तं च मातृजं त्रिकमुच्यते ॥ २९ ॥




मज्जास्थिशुक्लसङ्घातं पितृजं तदुदाहृतम् ।
प्रपुष्टमन्नपानाभ्यां पट्कमेवं विवर्धते ॥ ३० ॥

तद्भूतेभ्यस्समुत्पन्नं भूतैरेवोपबृंहितम् ।
बाह्यावयववृद्ध्यर्थं भूतान्येवं स्मृतानि हि ॥ ३१ ॥

न यान्ति (भर्तुरावातात्कृता)त्परतमं मुने ।
व्यवस्थाकारणी यस्मान्नियतिः प्राग्यथोदिता ॥ ३२ ॥

एवं चराचरं कृत्स्नं सत्याकाशे विसर्पितम् ।
तत्वधर्मस्स्मृतो व्योम्नः शिववक्त्राम्बुजोद्भवे ॥ ३३ ॥

तन्त्रे भुवनधर्मोऽपि संक्षेपात्कथयामि ते ।
स्थानानि भुवनेशानां पवित्राणि शुभानि च ॥ ३४ ॥

अमेयसुखपूर्णाणि रम्याणि विविधानि च ।
प्रधानत्वेन तान्यष्टौ तत्रादौ स्थाणुसंज्ञकम् ॥ ३५ ॥

सुवर्णाक्षमतो यस्माद्भद्रकर्णमतः परम् ।
रम्यं स्थानं चतुर्थाख्यमुक्तं परमशोभनम् ॥ ३६ ॥

महालम्पं पञ्चमं स्यात्स्थानं स्थानवतां वरम् ।
षष्ठमप्यतिमुक्ताख्यं रुद्रकोट्यण्डमेव च ॥ ३७ ॥

वस्त्रपादमतोऽधस्ताद्विख्यातं भुवनत्रये ।
तत्प्राप्य भारते पुण्ये मनुष्याणां हिताशया ॥ ३८ ॥

निर्मितानि पुरा धात्रा येषु सन्निहितो हरः ।

व्यक्तं यथानुक्रमतः प्रधानात्
विवृद्धये तज्जगतो यथावत् ।
तथा मयोक्तं गगनं समासा-
द्वायोरिदानीं प्रभवं विधास्ये ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
आकाशपटलस्समाप्तः ।

---

## अथ वायुतत्वपटलः ।

अथ वायोस्समुत्पत्तिं कथ्यमानं निबोध मे ।
यत्तत्प्राक्स्पर्शतन्मात्रं तामसं समुदाहृतम् ॥ १ ॥

तत्क्षोभादभवद्वायुर्द्विगुणो व्यूहलक्षणः ।
शब्दस्पर्शसमायोगात्स्वभावेन सदागतिः ॥ २ ॥

येनाविष्टं जगत्कृत्स्नं स्फुटते वृद्धिमेति च ।
येन संचार्यते ह्यात्मा धार्यते च जगत्सदा ॥ ३ ॥

यत्राबद्धविमानानां कोटयोऽप्यष्टविंशतिः ।
भ्रमन्ति चक्रवत्सोऽयं वायुः प्राणभृतां वरः ॥ ४ ॥

लोकत्रयकृतावासस्सप्तधा यो महामुने ।
येन सम्प्रेर्यते बीजं शरीरेऽन्तरवस्थितम् ॥ ५ ॥

---

१. योनावुत्पत्तिकारणमिति पाठः ।

येनावयवनिष्पत्तिः प्रसूतिश्चोपजायते ।
जरायूणां मुखे च्छिन्ने कण्ठे च कफवेष्टिते ॥ ६ ॥

वायोस्तत्र निरोधाच्च न गर्भस्थः प्ररोदिति ।
प्राणः प्राणमयो यस्मात्प्राणिनां जीवनं हि तत् ॥ ७ ॥

यदत्रोच्छ्वासनं प्रोक्तं प्राणस्तेनाथ नाभितः ।
समुत्थाय हृदुद्वाराद्विचेष्टति महाबलः ॥ ८ ॥

स वायुः पञ्चधा भिन्नो यथा भवति तच्छृणु ।
प्राणोऽपानस्समानश्च ह्युदानो व्यान एव च ॥ ९ ॥

प्राणो बलं समाख्यातस्स एवाणोर्न हीयते ।
न च प्राणादृते कश्चित्स्पन्दते मुनिसत्तम ॥ १० ॥

नासारन्ध्रवहो यो हि वेगवान् प्राण उच्यते ।
लघवं दीप्तिरायामो मेधा च प्राणवृत्तयः ॥ ११ ॥

अपानाख्येन भेदेन पानाद्याघ्रातमेव च ।
नयत्यधस्ताद्विण्मूत्ररेतांसि च यथाक्रमम् ॥ १२ ॥

नाभेरधस्ताद्यो वायुस्तेन सन्धुक्ष्यतेऽनलः ।
कृत्वाम्भोधस्ततोऽत्यन्नमुपरिष्टाद्विपच्यते ॥ १३ ॥

तद्विपाको द्विधा याति स्थूलस्सूक्ष्मश्च सुव्रत ।
स्थूलो विण्मूत्रसंज्ञोऽन्यस्सूक्ष्मः कोशविवृद्धये ॥ १४ ॥

---

१. योनावुत्पत्तिकारणमिति पाठः ।

समानो नाम यो भेदो वायोस्तेन विधार्यते ।
रसस्सोऽपि द्विधाभूयो रक्तं स्थूलतरं तयोः ॥ १५ ॥

रक्तान्मांसं नाडयश्च त्वग्वपुश्चोपजायते ।
सूक्ष्मभेदात्पुनर्भेदो रसस्येह विभिद्यते ॥ १६ ॥

स्थूलं चक्रविपाकोऽन्यस्सूक्ष्मान्मज्जोपजायते ।
तस्मात्सूक्ष्मतमो यो हि तेनास्थीनि भवन्ति हि ॥ १७ ॥

तस्मादप्यपरस्सूक्ष्मो रसपाकविभेदजः ।
तेन लोमनि केशाश्च नखाश्च मुनिपुङ्गव ॥ १८ ॥

प्रादुर्भवन्त्यथाङ्गानि कान्तिश्चैवोपजायते ।
मेदोऽन्यो धातुरुद्दिष्टस्सोऽप्यत्र रसपाकजः ॥ १९ ॥

समानमरुदुत्क्षेपाद्रसस्सर्वशरीरगः ।
नाडीरन्ध्रेषु सूक्ष्मेषु पुष्ट्यर्थमुपसर्पति ॥ २० ॥

इन्द्रियाणां हृदुत्थाभिर्नाडीभिर्दशभिस्स्थितः ।
पादाङ्गुष्ठाग्रतो व्यक्ता नाभितो हृदयं गता ॥ २१ ॥

सुषुम्ना नाम सा ज्ञेया ब्रह्मरन्ध्राब्जनिर्गता ।
प्राणिनां प्राणसञ्चारे निर्मिता परमेष्ठिना ॥ २२ ॥

अपानस्यापि संचारे सर्पितेयं सुविस्तृता ।
गुदादौ वर्तते वायुरधस्तादुपयाति हि ॥ २३ ॥

सर्वासामेव नाडीनामुद्भवो नाभिदेशतः ।
तस्माद्दशांगुलं नाळं निबद्धा याऽत्र वर्णिता ॥ २४ ॥

पद्मस्याष्टदलस्येत्थं तन्मध्ये भोगभुक् सदा ।
सान्निध्यस्सर्वगोप्यस्मात्कारणात्सुप्रतीयते ॥ २५ ॥

येनाशु विषयान् दृष्ट्वा विचारयति सादरम् ।
शोकः क्रोधो विषादो वा विस्मयस्ताप एव वा ॥ २६ ॥

हर्षो वाप्यथ संचिन्त्य हृदयेनैव भावयेत् ।
ताभ्योऽन्या नाडयस्सूक्ष्मास्ताभ्यस्सूक्ष्मतमास्तथा ॥ २७ ॥

एवं तल्लोमरूपान्ता नाडयो विसृता मुने ।
समीकरोति सर्वाङ्गैर्विपक्वं तद्रसं सदा ॥ २८ ॥

नाडीरन्ध्रेषु तेनोक्तस्समानोऽयं सदागतिः ।
उदानो ह्यूर्ध्वगमनो वह्निना सर्पितस्तदा ॥ २९ ॥

श्लेष्माणमुदरादूर्ध्वं पित्तं वाप्यथ लोहितम् ।
वमयत्यन्नपाने वा सोद्गारः क्षुद्विजृम्भिताः ॥ ३० ॥

काशशोषादयश्चापि विकारास्तत्समुद्भवाः ।
तस्मिन्नेव निबद्धा वाग्व्यज्यते तदुदीरणात् ॥ ३१ ॥

उन्मीलने च नेत्राणां तथा सम्मीलनेऽपि च ।
भ्रूविकारे च साटोप उदानः प्रविजृम्भितः ॥ ३२ ॥

आक्षेपाकुञ्चने व्याने गमने च प्रसारणे ।

चलनास्फोटने चैव बहिश्चेष्टासु सर्वदा ।
प्रवृत्तः कुरुते व्यानः पञ्चमो योऽनिलो महान् ॥ ३४ ॥

कर्माशयवशाद्बीजं निषिक्तं योनिमध्यतः ।
मातुर्दर्पबलान्नारी पितुर्दर्पबलात्पुमान् ॥ ३५ ॥

समदर्पबलोत्साहात्[1]केवलात्तु नपुंसकम् ।
मातापित्रोरनाचारादशुभैश्च पुराकृतैः ॥ ३६ ॥

भवेत्कुब्जः कुणिः पङ्गुः मूको वामन एव च ।
तयोर्भावसमायोगाद्विकारैरपि जायते ॥ ३७ ॥

पितृशीलः पुमानत्र मातृशीला कुमारिका ।
शीलेनोभयकोपेतमभवत्तन्नपुंसकम् ॥ ३८ ॥

विभिन्ने वायुना शुक्ले द्विधा भेदः प्रपद्यते ।
कुक्षिद्वयं समाश्रित्य युग्ममुत्पद्यते तदा ॥ ३९ ॥

अपानानिलविक्षोभाद्भेदैर्यावद्भिरिष्यते ।
तावन्तस्सूतयस्तस्य रेतसस्सम्भवन्ति हि ॥ ४० ॥

भवेदपत्यं विप्रेन्द्र निषेकसमयात्पुनः ।
यद्धातुस्तद्भवेच्छुक्लमनिलेनाऽऽकुलीकृतम् ॥ ४१ ॥

प्रकृतिस्तद्वशात्तस्य तादृगेवोपजायते ।
वातस्थानगते शुक्ले कृशो रूक्षोऽनवस्थितः ॥ ४२ ॥

पित्रोः कर्मानुरूपत्वात्स्वाशयाच्चानुरूपतः ।
चलस्वभावो लघ्वाशी विकृतेक्षण एव च ॥ ४३ ॥

---

१. कललात्तु इति पाठभेदः ।

पित्ताशयगते शुक्ले गौरः पिङ्गेक्षणस्तदा ।
अकालफलितो दक्षस्तेजस्वी चोपजायते ॥ ४४ ॥

श्लेष्मधातुर्जलाघ्राणस्निग्धत्वक्स्थिर एव च ।
शुक्लाक्षस्सुभगश्चैव सुकेशवदनस्तथा ॥ ४५ ॥

आमाशयगते शुक्ले स्थूलो जीर्णस्थितिस्सदा ।
विमिश्राण्यपि चिह्नानि विमिश्रैस्संभवन्ति हि ॥ ४६ ॥

भावैरन्तर्विशेषाच्च कालभेदैश्च सुव्रत ।
कामभेदैश्च जायन्ते वर्णाकारसमाधयः ॥ ४७ ॥

तत्सर्वं वायुसामर्थ्यात्प्रसूतेरुपवर्णितम् ।
प्राधान्यं कर्मणः प्रोक्तं तद्विपाकवशात्स्फुटम् ॥ ४८ ॥

आयुः कर्म तथा वृत्तं विद्या जन्म च यादृशम् ।
प्राप्नोति नान्यथा यस्मात्तस्मादेतत्सुनिश्चितम् ॥ ४९ ॥

बोद्धव्यं मुनिशार्दूल वायोरप्यस्वतन्त्रता ।
स्वतन्त्रः परमेशानो यदायत्तं जगत्सदा ॥ ५० ॥

तत्वधर्मप्रसङ्गेन वायोरुक्तं विचेष्टितम् ।
स्थानानि तत्र रुद्राणामष्टावत्यद्भुतानि तु ॥ ५१ ॥

भीमं भीमेश्वरस्योक्तं स्थानमन्यत्सुखावहम् ।
महेन्द्रं चारुरत्नाढ्यं मन्त्रेशस्य च धीमतः ॥ ५२ ॥

---

१. शुक्र इति पाठभेदः ।

महानादस्य नाथस्य चाट्टहासाख्यमेव हि ।
विमलं विमलस्योक्तं स्थानं रुद्रस्य शोभनम् ॥ ५३ ॥

नाखलं नखलेशस्य ततोऽन्यद्विपुलं मुने ।
स्थानं कनकलेशस्य तन्नाम्ना चारुमण्डितम् ॥ ९४ ॥

रुद्रक्षेत्रमतोऽधस्तात्स्थानं रुद्रस्य कीर्तितम् ।
गयेति नामतस्स्थानं तत्रासौ प्रपितामहः ॥ ९५ ॥

रुद्रैरात्मगुणोपेतैर्वृतस्स परमेश्वरः ।

वायोर्मयाध्यात्मबहिस्स्थितस्य
धर्मस्समासात्कथितो विभज्य ।
एकोऽपि सन् भिद्यते वृत्तिभेदात्
वह्नेरिदानीं शृणु विस्तरं मे ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे,
वायुतत्वपटलस्समाप्तः ।

---

## अथ अग्निपटलः ।



अथेदानीं जगद्धातुरमोघेनात्मतेजसा ।
सृजतो रूपतन्मात्रात्संक्षुब्धादभवत्तदा ॥ १ ॥

त्रिगुणोऽग्निस्स्ववीर्येण स्वरूपेणातिशोभनः ।
शब्दस्पर्शसमायोगात्तत्तेजः पक्तिलक्षणम् ॥ २ ॥

---

१. कुरु इति पाठभेदः ।

येनान्तर्वर्तिना सर्वं जगत्पाकमुपैति हि ।
ऊष्मतोऽङ्कुरतो बीजात् क्रमशो वृद्धिमेति हि ॥ ३ ॥

क्षुत्पिपासापरीतापपक्तिवृत्तेन चाप्यणोः ।
नाभिस्थो वायुना सार्धं यत्कोष्ठेन्नादिकं गतम् ॥ ४ ॥

तत्पचत्यात्मसामर्थ्यात्सुसमिद्धोदकेन्धनः ।
बाह्यतस्स विशेषत्वाद्दहनालोकपक्तिभिः ॥ ५ ॥

जगतश्चोपकाराय स्थापितोऽग्निस्स्वयम्भुवा ।
स्वर्गावाप्त्यै त्रिधा व्याप्य हूयते वेदवित्तमैः ॥ ६ ॥

तद्भेदो गार्हपत्याग्निर्गीयते कल्पितः पुरा ।
ततश्चाहवनीयाख्यो दक्षिणाग्निश्च कीर्तितः ॥ ७ ॥

यतोऽग्नावस्थितास्सत्यः प्रीयन्ते सर्वदेवताः ।
असौ वह्निरिति ज्ञेयो येन जीर्यति यौवनम् ॥ ८ ॥

धर्मोऽस्य सहजोष्णत्वं मरुद्योगाच्चलात्मता ।
दृश्यते मुनिशार्दूल न कदाचिन्निरिन्धनः ॥ ९ ॥

संग्रहेऽम्भोणवो ज्ञेयास्सर्वास्विन्धनजातिषु ।
तासु काठिन्यभावो यस्सूक्ष्मः क्ष्माणुमयो हि सः ॥ १० ॥

दह्यतश्चाग्निना तस्य द्विधा भेदः प्रजायते ।
पार्थिवा[1] परमा काष्ठा भस्मत्वमुपयाति हि ॥ ११ ॥

अम्भोणवश्च नीहारन्यायेनोर्ध्वं विनिर्ययुः ।
प्रयान्ति स्वोचितं स्थानं यदुक्तं प्राक्स्वयम्भुवा ॥ १२ ॥

---

१ पार्थिवाणोः परा काष्ठा इति पाठभेदः ।

प्रजार्थं रश्मिभिश्शेषमर्कस्याम्भोऽपकृष्यते ।
संविभज्यैकमेवात्र विधात्रा तद्द्विधा कृतम् ॥ १३ ॥

स्थितये त्वग्निभावेन तथा लोकाय भास्करः ।
वह्निस्संलीयते भानोस्समाप्येन्धनराशयः ॥ १४ ॥

तस्मात्ते किरणा भानोर्वर्षन्ति च तपन्ति च ।
व्यक्तिर्ज्योतिष्मतां सिद्धा नान्यतो हुतभोजनात् ॥ १५ ॥

तत्वमेतत्समाख्यातं स्वधर्मेण यथा तथा ।
तस्मिन्ये भुवनेशाना रुद्रा बालेन्दुमौळयः ॥ १६ ॥

तेषां स्थानानि दिव्यानि दिव्याचारगुणानि तु ।
नामभिः कीर्तयिष्यामि यथावदनुपूर्वशः ॥ १७ ॥

भैरवं नाम तत्रैकं केदारश्चाप्यतः परम् ।
तृतीयं मध्यमं नाम महाकालं चतुर्थकम् ॥ १८ ॥

पञ्चमं स्थानमन्यच्च नाम्ना त्वाम्रादिकेश्वरम् ।
जलेश्वरमतोऽधस्ताच्छ्रीशैलं च ततः परम् ॥ १९ ॥

हरिश्चन्द्रं च विख्यातमष्टमं मुनिसत्तम ।

येनाशेषमिदं स्वधर्मकिरणैश्चित्रं जगद्योतितं
स्वापस्संपरिवेष्टिता दशगुणोत्सेधेन क्षित्योदरे ।
सोऽयं वह्निरमोघवीर्यबलवान्संक्षिप्य चोक्तोऽधुना
वक्तव्यं विधिवन्मुने समुचितं प्राप्तं पयोऽनुक्रमात् ॥

श्रीमतङ्गपारमेश्वरे विद्यापादे,
अग्निपटलस्समाप्तः ।

---

# अथ तोयपटलः ।

अथातस्सम्प्रवक्ष्यामि सान्वयोपात्तलक्षणम् ।
तोयं यद्रसतन्मात्रात्संक्षुब्धात्कारणेच्छया ॥ १ ॥

व्यक्तं लोकोपकाराय तथैवाणोश्चतुर्गुणम् ।
रसस्स्वादुः प्रबोद्धव्यस्त्रयोऽन्ये सङ्करोद्भवाः ॥ २ ॥

शब्दस्स्पर्शश्च रूपं च यतोऽन्योन्यं समीरिताः ।
विशेषाद्व्यक्तिमायान्ति तमसा पूरिता भृशम् ॥ ३ ॥

बीजं भूतविकारोत्थं भूतैरेव विवर्धितम् ।
तदेव भोग्यं भोक्तृत्वं शरीरं हि शरीरिणाम् ॥ ४ ॥

कृतकं चाप्यनित्यं च दुःखानामालयं परम् ।
येन विक्लिद्यते यद्धि यत्प्रभावाच्च संग्रहम् ॥ ५ ॥

प्रयान्ति क्ष्माणुसङ्घातास्तत्तत्तोयाणुवीर्यतः ।
शीतत्वं च द्रवत्वं च स्निग्धता चाम्भसस्सदा ॥ ६ ॥

धर्मो यश्च शरीरेऽस्मिन् रक्तश्लेष्मादिको गुणः ।
पयसस्तद्विजानीयात्काठिन्यं पार्थिवो गुणः ॥ ७ ॥

धातवः पयसा सिद्धाः पार्थिवा लघुतां गताः ।
आग्नेयेनाथ वीर्येण पच्यमानाश्शनैश्शनैः ॥ ८ ॥

ततः पिण्डत्वमापन्ना विभक्ताश्चापि वायुना ।
स्वमाहात्म्यमनुप्राप्तास्स्वेन स्वेन महामुने ॥ ९ ॥

धर्मेणैवोपलक्ष्यन्ते देहे व्योम्ना प्रकाशिताः ।
जीवनं सर्वजन्तूनां कार्यस्य करणस्य च ॥ १० ॥

तत्सर्वमम्भसो वीर्यं पोषणं पुष्टिवर्धनम् ।
तृट्तापवारणं लोके तदेवामृतमुत्तमम् ॥ ११ ॥

विभज्य धात्रा स्थितये बहिरन्तश्च कल्पितम् ।
परापरेण भेदेन जगत्यस्मिन् सितासिते ॥ १२ ॥

स्थानान्यत्र मुनिव्याघ्र रुद्राणाममितौजसाम् ।
निर्मितान्यधिकाराय श्रीकण्ठेन महात्मना ॥ १३ ॥

लाकुलं प्रथमं तत्र भारभूत्याह्वमेव च ।
तृतीयं दण्डिनाम्नो वै ह्याषाढीशमतः परम् ॥ १४ ॥
पुष्करं पञ्चमं प्रोक्तं नैमिशं षष्ठमुच्यते ।
प्रभासमपरं रम्यं तस्मादप्यपराह्वयम् ॥ १५ ॥

स्थानान्येतानि तत्प्राप्त्यै भूलोकेऽपि महात्मनाम् ।
स्थापितानि जगद्धात्रा पुण्यतोयानि सर्वतः ॥ १६ ॥

एषु नित्यं शिवस्साक्षादनुगृह्णाति भावितः ॥
प्रथितगुणगणोक्त्या वर्णितं तत्वमाप्यं
शिववदनसमुत्थैर्वाक्यरत्नैर्यथावत् ।
प्रविकसितविवेका तत्वधर्मेण लेशा-
दवसरपदमाप्ता वर्ण्यतेऽतो धरित्री ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे
तोयपटलस्समाप्तः ।

---

# अथ पृथिवीतत्वपटलः ।

अथेदानीं समासेन लोकधात्री महामुने ।
संक्षुब्धाद्गन्धतन्मात्राद्गुणैः पञ्चभिरन्विता ॥ १ ॥

स्वाक्योऽसौ गन्ध एवोक्तश्चत्वारोऽन्येऽनुषङ्गजाः ।
तस्याणोर्व्यक्तिमापन्ना निविडत्वेन बाह्यतः ॥ २ ॥

आपादतलमस्तिष्कं शरीरत्वेन सर्पिता ।
तस्मादेव पराद्बीजाच्छुक्लाख्यात्क्लेदिता सती ॥ ३ ॥

अम्भसा पक्तिमायाति वह्निना मुनिपुङ्गव ।
वायुना शोषमापन्ना प्रभेदेन च संस्थिता ॥ ४ ॥

सारं तावत्परा काष्ठा नखदन्ताऽस्थिस्नायवः ।
कोशाश्च वर्णिताः पूर्वं तेच संक्षेपतोऽधुना ॥ ५ ॥

बाह्योपवर्णितं वस्तु युक्तितश्चोपवर्ण्यते ।
देवमानुषतिर्यञ्चो यदाश्रित्य समासते ॥ ६ ॥

तत्तत्वं पार्थिवं विद्याद्गुरुत्वादप्यधोगतः ।
युगपच्च समुत्पत्तिस्तत्वानां ग्रन्थितस्स्मृता ॥ ७ ॥

यल्लघु व्यापकं पूर्वं तद्व्याप्य तदधस्स्थितम् ।
तत्वं गुरुतरं यस्मात्तस्मादप्यपरं तथा ॥ ८ ॥

व्याप्यव्यापकभावेन जगन्त्यन्तश्श्रृतानि तु ।
तत्वानि तत्वमार्गेऽस्मिन्यथावद्रचितानि तु ॥ ९ ॥

ऽव्यक्तमण्डमतोऽव्यक्तात्कपालयुगलान्वितम् ।
यदधस्तात्कपालं स्यात्तामसं परिकीर्तितम् ॥ १० ॥

राजसं स्यादथोर्ध्वं तु तयोर्योगस्तु सात्विकः ।
कुतोऽवसीयते यस्माद्विकासस्सत्व उच्यते ॥ ११ ॥

विकासो नाम तन्मध्ये सर्वज्योतिष्मतां स्थितिः ।
बाह्यतश्चावृतं रुद्रैस्स्वतेजोद्भूतवृत्तिभिः ॥ १२ ॥

ऊर्ध्वमन्यत्कटाहस्य विधृतं यैर्महात्मभिः ।
तेषां नामानि कथ्यन्ते रुद्राणामप्यनुक्रमात् ॥ १३ ॥

विचक्षण इति ख्यातो विशिष्टोऽन्यो नभस्तदा ।
विभावश्च महातेजास्संवाहश्चापि वीर्यवान् ॥ १४ ॥

सुरार्चितोऽपरस्त्र्यक्षो गणाध्यक्षस्तथाऽपरः ।
विभुश्च शम्भुनामा च बलं कमलजन्मनः ॥ १५ ॥

आक्रम्य संस्थितास्त्वेते नैव त्यज्यन्त्यनिन्दिताः ।
ऊर्ध्वभागे महात्मानो ब्रह्मणोऽण्डस्य धारकाः ॥ १६ ॥

सुखदुःखकरश्श्रीमान् सर्वविद्याविधायकः ।
तथा बलिप्रियो नाम्ना भूतपालश्च वीर्यवान् ॥ १७ ॥

पञ्चमः पिङ्गलो नाम षष्ठो मातृवृतस्तदा ।
वेदानां पारगो रुद्रस्सर्वज्ञश्च प्रतापवान् ॥ १८ ॥

ज्ञानभुग्विपुलश्श्रीमान् तथा विद्याधिपो परः ।
दशैते शूलिनस्त्र्यक्षा ईशाननिलयान्विताः ॥ १९ ॥

---

१. विवाहश्चेति पाठभेदः ।

ईशानबलमाक्रम्य विचरन्ति यशस्विनः ।
ईशेनैव प्रपूज्यन्ते यथेप्सितफलप्रदाः ॥ २० ॥

कामरूपी प्रसादश्च लक्ष्मीवांश्च प्रचण्डधृत् ।
सौम्यदेहोऽपरो धन्यो रूपवांश्च महाबलः ॥ २१ ॥

निधीशो रत्नधारी च जटामकुटधृक् तथा ।
कौबेर्यां संस्थिता रुद्राः कुबेरेण च पूजिताः ॥ २२ ॥

तद्बलं चाप्यवष्टभ्य संस्थिताः कारणेच्छया ।
मेघकेतुः कपर्दी च रुद्रः पञ्चशिखी परः ॥ २३ ॥

पञ्चान्तकोऽन्यो विख्यातस्तस्मादन्यः क्षयान्तकः ।
तीक्ष्णस्सूक्ष्मश्च विख्यातो वायुवेगश्च वीर्यवान् ॥ २४ ॥

लघुनामापरस्तत्र शीघ्रश्चैवातिविक्रमः ।
वायव्यां ब्रह्मणोऽण्डस्य रुद्रा वायुप्रपूजिताः ॥ २५ ॥

वायोर्बलं समाक्रम्य क्रीडन्त्युत्कृष्टचेतसः ।
भीषणो बडवावक्त्रस्तृतीयोऽथ जलान्तकः ॥ २६ ॥

दीर्घबाहुश्च विख्यातो जयभेद्रश्च वीर्यवान् ।
श्वेतो महाबलश्चैव पाशहस्तश्च सुव्रत ॥ २७ ॥

अबलोऽन्यो बलस्तस्माद्वारुण्यां दिशि संस्थिताः ।
वरुणस्य बलं जित्वा प्रक्रीडन्त्यनिवारिताः ॥ २८ ॥

पूज्यन्ते वरुणेनैव सर्वकामफलप्रदाः ।
दंष्ट्री च लोहितो धूम्रो विरूपाक्षस्तथैव च ॥ २९ ॥

ऊर्ध्वशेफश्च विख्यातस्ततश्चान्यो भयानकः ।
क्रूरदृक् शत्रुहन्ता च मारणश्चेति कीर्तितः ॥ ३० ॥

दशमो नैऋतो नाम्ना रुद्रश्चतिबलोत्कटः ।
नैऋत्यां संस्थिता रुद्रास्तद्दशेशेन पूजिताः ॥ ३१ ॥

बलमाक्रम्य चेष्टन्ते नैऋतेर्भीमविक्रमाः ।
वियोक्ता चैव संयोक्ता रुद्रो धर्मपरस्तथा ॥ ३२ ॥

तस्माद्धर्मपतिश्चैव कालरुद्रश्च वीर्यवान् ।
कर्ता विधाता धाता च तस्मान्मृत्युहरोऽपरः ॥ ३३ ॥

याम्यश्चेति यमस्यैते बलमाक्रम्य संस्थिताः ।
धर्मराजेन पूज्यन्ते रुद्राश्चन्द्रार्धमौळयः ॥ ३४ ॥

क्षयान्तको महातेजा रुद्रा भस्मान्तकस्तथा ।
बभ्रुश्च ज्वलनश्चैव हरश्चैव महाद्युतिः ॥ ३५ ॥

पिङ्गलः खादकोऽन्योऽपि हुताशी चातिवीर्यवान् ।
अग्निरुद्राश्च हीत्येते समीहितफलप्रदाः ॥ ३६ ॥

आग्नेय्यां संस्थिताश्चाग्नेर्बलमाक्रम्य शक्तिभिः ।
अग्निना च प्रपुज्यन्ते रुद्रास्स्वच्छन्दजीविनः ॥ ३७ ॥

त्रिदशेशः पिनाकी च शास्ता चाव्ययएव च ।
विभूतिश्च महातेजा रुद्रस्तस्मात्प्रमर्दकः ॥ ३८ ॥

वज्रदेहश्च बुद्धश्चाप्यजश्चेति महाबलः ।
कपालीशेन सहिता दिशीन्द्रस्य व्यवस्थिताः ॥ ३९ ॥

विचरन्ति महाभोगाश्शक्रेणैव प्रपुजिताः ।
बलमाक्रम्य शक्रस्य मोदन्ते दुःखवर्जिताः ॥ ४० ॥

क्षितिभृच्चेति विख्यातस्ततोऽन्यस्सर्वतोमुखः ।
ग्रसनो धैर्यनामा च विषभुक्चापरस्स्मृतः ॥ ४१ ॥

वृक्षश्चैव सुतेजस्वी पाताळाधिपतिस्तथा ।
पारश्च पारकश्चैव तथाऽनन्तः प्रतापवान् ॥ ४२ ॥

एते रुद्रा दश प्रोक्ता अधस्ताद्भीमविक्रमाः ।
अनन्तबलमाक्रम्य विचरन्ति यशस्विनः ॥ ४३ ॥

अनन्तेनैव पूज्यन्ते भोक्तारः पारमेश्वराः ।
नियुक्ताः परमेशेन श्रीकण्ठेन महात्मना ॥ ४४ ॥

धृतमेभिर्महावीर्यैरण्डं कमलजन्मनः ।
तदन्तस्संस्थिता लोकास्सप्तामी तान्निबोधत ॥ ४५ ॥

कटाहस्योर्ध्वभागे तु तदूर्ध्वेऽवस्थितं पुरम् ।
लोकनाथस्य रुद्रस्य शुद्धस्फाटिकसन्निभम् ॥ ४६ ॥

वृतं गणैस्सहस्रैस्तु वीरभद्रपुरस्सरैः ।
सत्यलोकस्ततोऽधस्ताद्ब्रह्मा यत्रविराजते ॥ ४७ ॥

अन्यो यस्तु तपोलोको यत्र ते ब्रह्मणस्सुताः ।
सनकाद्या महात्मानो योगिनो योगतत्पराः ॥ ४८ ॥

वसिष्ठपुलहाद्याश्च साद्ध्याश्चाऽपि व्यवस्थिताः ।
जनोलोको मुनिव्याघ्र ततोऽधस्संस्थितो महान् ॥ ४९ ॥

कृताऽधिकारिणो यस्मिन् इन्द्राद्यास्संव्यवस्थिताः ।
स्वर्लोकश्चाप्यतोऽधस्ताद्भुवो यत्र व्यवस्थितः ॥ ५० ॥

ऋषयश्च महाभागा ग्रहाश्च मुनिपुङ्गव ।
तस्याप्यधो भुवर्लोको यत्रादित्यपुरस्सराः ॥ ५१ ॥

आसते वसवो रुद्रा दिव्याचारगुणान्विताः ।
विंशत्यष्टौ विमानानां कोटयश्च महात्मनाम् ॥ ५२ ॥

साध्यानां ते निबद्धास्तु सुखिनस्ते दिवौकसाम् ।
भूलोकस्तदधस्तात्तु सप्तद्वीपार्णवान्वितः ॥ ५३ ॥

नानारत्नविचित्राढ्यो नगरारामपर्वतैः ।
सरिद्भिश्चार्णवैः कीर्णो मृगपक्षिसमाकुलः ॥ ५४ ॥

मनुष्याः पशवश्चैव मृगाः पक्षिण एव च ।
सरीसृपास्स्थावराश्च यत्र भोगभुजस्थिताः ॥ ५५ ॥

तन्मध्ये क्षितिभृच्छ्रीमान् मेरुनामा दिवौकसाम् ।
निवासो निर्मितो धात्रा तन्मध्ये ब्रह्मणस्सभा ॥ ५६ ॥

पूर्वोत्तरे तु दिग्भागे ज्योतिष्कं शिखरं महत् ।
तत्राहं मुनिशार्दूल लोकानुग्रहकारणात् ॥ ५७ ॥

कृताऽधिकारस्तत्राऽपि रुद्रा वृषभवाहनाः ।
नैके त्रिशूलिनस्त्र्यक्षाःस्फुरच्चन्द्रार्धधारिणः ॥ ५८ ॥

सभायाश्चाप्यधोभागे ह्यक्षपादाः प्रतिष्ठिताः ।
अष्टौ तत्र स्थिताः पुर्यश्शक्रादीनां महात्मनाम् ॥ ५९ ॥

पूर्वेणेन्द्रस्य विख्याता पुरी नाम्नाऽमरावती ।
अग्नेस्तेजोवती नाम्ना दिश्याग्नेय्यां व्यवस्थिता ॥ ६० ॥

याम्यायां च यमस्योक्ता नाम्ना संयमनी पुरी ।
यक्षाधिपस्य नैऋत्यां पुरी कृष्णेति शब्दिता ॥ ६१ ॥

शुद्धवत्यथ वारुण्यां पुरी ज्ञेया प्रचेतसः ।
वायोर्गन्धवती नाम्ना वायव्यां संस्थिता गिरेः ॥ ६२ ॥

महोदयाप्युत्तरतः कुबेरस्य पुरी शुभा ।
सुखावहा तथैशान्यामीशानस्य पुरी मुने ॥ ६३ ॥

योजनानां स्मृतं लक्षं मेरुरुच्छ्रूयतेऽचलः ।
अधोभागे क्षिताविष्टं सहस्राणि तु षोडश ॥ ६४ ॥

क्षितेरुपरि यो भागश्चतुराशीत्यथोच्छ्रितः ।
जम्बुश्शाकः कुशः क्रौञ्चः प्लक्षो गोमेद एव च ॥ ६५ ॥

पुष्करश्चेति सप्तैते द्वीपा मुनिवरोत्तम! ।
क्षारः क्षीरोदधिस्सर्पिस्तथेक्षुरससंज्ञकः ॥ ६६ ॥

मदिराऽथ तथा स्वादु सागरास्सप्त कीर्तिताः ।
गर्भोदश्चेति विस्तीर्णस्सोष्टमः परिमण्डलः ॥ ६७ ॥

बहुनात्र किमुक्तेन वस्तुमात्रं हि कारणम् ।
भूमेरधस्सुराणां तु पुराणि विविधानि वै ॥ ६८ ॥

सर्वरत्नोज्वलानि स्युस्तेषां नामानि तच्छृणु ।
तलं वितलसंज्ञं तु नितलं सुतलं तथा ॥ ६९ ॥

तलातलं पञ्चमं स्यात्ततश्चान्यद्रसातलम् ।
पाताळं सप्तमं ज्ञेयं बली यत्रासुरो महान् ॥ ७० ॥

एषु रक्षोरगा दैत्याश्शतशोऽथ सहस्रशः ।
क्रीडन्ति सुखिनश्शूराः कन्यकाभिस्समावृताः ॥ ७१ ॥

विमानकोट्योऽधस्तान्नरकाणां व्यवस्थिताः ।
अष्टाविंशतिविख्याताः पापकर्मरतात्मनाम् ॥ ७२ ॥

भुवनानां शतं तत्र चत्वारिंशत्तु नामभिः ।
तदहं कीर्तयिष्यामि शृणुष्वेकमना मुने! ॥ ७३ ॥

रौरवं प्रथमं तत्र महारौरवमेव च ।
कालसूत्रमिति ख्यातं भुवनं पापकर्मणाम् ॥ ७४ ॥

अङ्गारनिचयस्तस्मात्कुम्भीपाकश्च दुस्सहः ।
क्षुराधारो महाघोरो लोहदण्डश्च दारुणः ॥ ७५ ॥

अस्रं मेदस्तथा पूतिपूर्णोतीवभयङ्करः ।
क्रकचोऽतोऽस्थिभङ्गश्च विट्पूर्णश्च भयावहः ॥ ७६ ॥

वृष्टिस्ततोऽम्बरीषश्च क्षुत्पिपासश्च दुस्सहः ।
उष्णश्शीतश्च नरकास्तत्र सञ्जीवनो महान् ॥ ७७ ॥

तस्मात्पद्मो महापद्मो त्रपुलेपस्तथापरः ।
असितानलं महाघोरं ततः पङ्कस्सुदारुणम् ॥ ७८ ॥

तप्तलाक्षापशो नाम पूतिमांसोऽतिभीषणः ।
निरुच्छ्वासस्ततोच्छ्वासस्ततो युग्माचलोऽपरः ॥ ७९ ॥

कूटशाल्मलिनामा च नदी वैतरिणी तथा ।
कृमीणां निचयो घोरोप्यवीची च भयङ्करः ॥ ८० ॥

अवीचीत्वम्बरीषश्च रौरवश्चाति दुःखदः ।
अष्टौ भेदास्स्मृतास्त्वेते चतुर्भेदास्तथा परे ॥ ८१ ॥

ब्रह्महत्यादिभिः पापैर्गुरुद्रोहादिभिस्तथा ।
परदारापहरणैरन्यायैश्चापरैरपि ॥ ८२ ॥

पात्यन्ते पापकर्माणः क्रूराः क्रूरेण कर्मणा ।
दृष्ट्वा सुखभुजो देवा मानुषांश्चाजुगुप्सितान् ॥ ८३ ॥

तप्यन्ते पापिनस्सर्वे ह्यतस्ते ह्यूर्ध्वदृष्टयः ।
देवा ह्यधोदृष्टयस्तु स्वैश्वर्यमहदर्पिताः ॥ ८४ ॥

एभ्योऽधस्संस्थितो रुद्रः कालाग्निरिति विश्रुतः ।
भुवनैर्भुवनेशानैर्वृतोऽनेकैर्महाबलैः ॥ ८५ ॥

तत्त्वं मया ते कथितं धराख्यं
समासतस्तत्त्वविधानमार्गैः ।
प्रमाणमस्याप्यधुना विधास्ये
कालेन सार्धं तव विप्रमुख्य! ॥ ८६ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे,

पृथिवीतत्वपटलस्समाप्तः ।

---

# अथ प्रमाणपटलप्रारम्भः ।

अथाध्वपरिसंख्यानं वर्णयिष्ये यथाक्रमम् ।
पार्थिवाणुचतुष्केण त्रुटिरेकाऽभिधीयते ॥ १ ॥

लक्षं त्रुटिचतुष्केण द्वे लक्षे कणिका भवेत् ।
कणिकानां चतुष्केण सिद्धार्थश्चाऽभिधीयते ॥ २ ॥

सिद्धार्थकचतुष्केण यवसंज्ञाऽभिधीयते ।
यवाष्टकेन विज्ञेयमङ्गुलं मुनिसत्तम ॥ ३ ॥

अङ्गुलानां चतुर्विंशो हस्त इत्यभिधीयते ।
चतुर्हस्तो धनुर्ज्ञेयः शास्त्रेऽस्मिन् पारमेश्वरे ॥ ४ ॥

धन्वन्तरसहस्रेण व्याघाटस्समुदाहृतः ।
व्याघाटानां चतुष्केण क्रोश इत्यभिधीयते ॥ ५ ॥

क्रोशानां च चतुष्केण योजनं परिकीर्तितम् ।
ब्रह्मणोऽण्डकटाहश्च कोटिस्थौल्येन कीर्तितः ॥ ६ ॥

कालानलपुरं कोटिस्तज्ज्वाला दशकोटयः ।
तमश्शेषं निरालम्बं योजनानां प्रमाणतः ॥ ७ ॥

कोटयः पञ्च तस्योर्ध्वे नरकास्सम्प्रकीर्तिताः ।
एकलक्षोच्छ्रयास्सर्वे द्वात्रिंशदपि सुव्रत ॥ ८ ॥

नवतिर्नवलक्षाणि चैकैकस्य यदन्तरम् ।
गत्वा त्रिंशत्सहस्राणि योजनानां तथोपरि ॥ ९ ॥

कूष्माण्डभुवनं रम्यं रुद्रस्य नवतिस्तथा ।
नवलक्षाणि चोत्सेधस्तस्मात्पाताळसप्तकम् ॥ १० ॥

नवयोजनसाहस्रमुच्छ्रितानि पुराणि तु ।
सहस्रान्तरितानि स्युर्यावद्भूपृष्ठमागतम् ॥ ११ ॥

कालाग्नेर्भूतले यावत्सर्वमेकत्र पिण्डितम् ।
योजनानां तु पञ्चाशत्कोटयोऽध्वा प्रतिष्ठितः ॥ १२ ॥

भूपृष्ठादुच्यतेऽध्वानमाध्रुवान्तं महामुने ! ।
भासकं पञ्चसंख्याया लक्षाणां नात्र संशयः ॥ १३ ॥

एतल्लोकत्रयं प्रोक्तमत ऊर्ध्वं प्रवर्ण्यते ।
स्वर्लोकात्परतोऽध्वानं योजनानां महामुने ! ॥ १४ ॥

द्वे कोट्यशीतिलक्षाणां पञ्चभिश्चाप्यथाऽधिकाः ।
अष्टकोट्यन्तरे तस्माज्जनो लोकः प्रतिष्ठितः ॥ १५ ॥

दश द्वे च स्मृताः कोट्यो जनादन्यस्तपस्स्थितः ।
तस्मात्सत्यं विजानीयाद्दशषट् चाप्यतीत्य तु ॥ १६ ॥

दशकोट्यन्तरे तस्माच्छ्रीकण्ठस्य निकेतनम् ।
अण्डमप्युच्छ्रितं कोटियोजनानां तथोपरि ॥ १७ ॥

एतावत्पार्थिवं तत्त्वं शतकोट्युच्छ्रितं मतं ।
भूलोकस्याप्यथेदानीं प्रमाणमुपवर्ण्यते ॥ १८ ॥

योजनानां सहस्राणि मेरोरर्धेन पूर्वतः ।
इळावृतस्यैकदेशस्सहस्राणि नवादितः ॥ १९ ॥

सहस्रे माल्यवांस्तस्माद्योजनानां सहस्रशः ।
द्वात्रिंशतिसहस्राणि भद्राश्वं वर्षकं मुने॥ २० ॥

पूर्ववत्पश्चिमेनाऽपि मेरोरर्धं प्रतिष्ठितम् ।
इळावृतस्यापि तथा माल्यवान् गन्धमादनः ॥ २१ ॥

वर्षं हि केतुमालाख्यं भद्राश्वमिव संस्थितम् ।
मेरोरिळावृतस्याऽपि दक्षिणेन तु पूर्ववत् ॥ २२ ॥

निषधस्याचलेन्द्रस्य विस्तारो हेमकूटवत् ।
योजनानां सहस्रे द्वे तस्माच्चावर्षकं मतम् ॥ २३ ॥

हरिनामसहस्राणि वैपुल्येन तु वेदितम् ।
हेमकूटाचलस्तस्मात्सहद्वयवान् स्मृतः ॥ २४ ॥

ततः किंपुरुषं नाम विज्ञेयं हरिवर्षवत् ।
हिमवान् पर्वतेन्द्रस्तु विस्तारो हेमकूटवत् ॥ २५ ॥

भारतस्याऽपि विस्तारो यथा किंपुरुषाह्वये ।
उत्तरेणाऽपि शैलेन्द्रराजार्धं पूर्ववत्स्मृतम् ॥ २५ ॥

ततो नीलगिरेश्चाऽपि प्रमाणं कीर्तितं मुने ।
नीलो निषधवज्ज्ञेयः पर्वतः पूर्वपश्चिमः ॥ २७ ॥

तस्योत्तरेण हैर्याख्यं सहस्रं नव संज्ञितम् ।
तस्माच्च क्षितिभृच्छ्वेतस्सस्त्रद्वयविस्तृतः ॥ २८ ॥

---

१. मुनिसत्तम इति पाठभेदः । २. तदादीलावृतस्यापीति पाठभेदः ।
३. पर्वतोत्तम इति पाठभेदः ॥ ४. रम्याख्यं इति पाठभेदः ।

हिरण्योऽपि सविस्तारः सहस्राणि नवोदितः ।
शृङ्गवानपि विस्तारश्श्वेतवत्पर्वतोत्तमः ॥ २९ ॥

उदक्संस्थं शृङ्गवतः कुरुवर्षमिति स्थितम् ।
तद्धि भारतवत्ज्ञेयं सर्वमेकत्र पिण्डितम् ॥ ३० ॥

लवणार्णवपर्यन्तं लक्षमेकं समन्ततः ।
जम्बूद्वीपस्य विख्यातं तद्बहिर्लवणोदधिः ॥ ३१ ॥

द्विगुणस्तु भ्रमश्शाकस्तस्माच्चाद्विगुणं पयः ।
दध्यम्भोनिधिपर्यन्तं शैलेन्द्रं चार्धसंख्यया ॥ ३२ ॥

कोटिद्वयं योजनानां सार्धं मुनिवरोत्तम ।
लक्षाणां त्रितयं चैव सार्धं वृद्धिर्न संशयः ॥ ३३ ॥

दशकोटिप्रविस्तीर्णा स्वादूदात्परतास्थिता ।
शुद्धहेममयी भूमिर्देवानां क्रीडनाय तु ॥ ३४ ॥

तद्बहिः पर्वतो नाम्ना लोकालोकः प्रविस्तरः ।
सहस्राणि स विज्ञेयो योजनानां समन्ततः ॥ ३५ ॥

कृत्स्नार्णवप्रमाणेन लोकालोकस्य बाह्यतः ।
चक्रवत्स तु बोद्धव्यो गर्भोदश्च समुद्रराट् ॥ ३६ ॥

ततस्तस्मान्महाघोरं तच्चेदानीं प्रवर्ण्यते ।
पञ्चत्रिंशत्समाख्याता योजनानां च कोटयः ॥ ३७ ॥

ऊनविंशतिभिर्लक्षैश्चाधिका व्रतभूषण ।
चत्वारिंशत्सहस्राणि सर्वमेकत्र पिण्डितम् ॥ ३८ ॥

सार्धमण्डकटाहेन कोटयोऽर्धेन मेदिनी ।
पञ्चाशत्तत्वमन्यत्स्यादर्धे मेरोस्तु पूर्ववत् ॥ ३९ ॥

एवं कोटिशतं प्रोक्तं पार्थिवं तत्र तत्र तु ।
तस्माद्दशगुणं तोयं तोयादग्निस्ततोऽनिलः ॥ ४० ॥

अनिलाच्चाप्यथाकाशस्तन्त्रेऽस्मिन् कारणोदिते ।
आकाशाच्चाप्यहङ्कारस्तस्माच्च परतो महान् ॥ ४१ ॥

महतः परतो ज्ञेयं गुणानां त्रितयं मुने ।
गुणत्रयात्प्रधानाख्यं तत्वं दशगुणोत्तरम् ॥ ४२ ॥

शतोत्तरगुणानि स्युश्शेषाण्युक्तानि शासने ।
मायान्तानि तु तत्वानि तेभ्यस्तत्वं सहस्रधा ॥ ४३ ॥

यावत्सदाशिवं तत्वं तत्परं लक्षधाऽधिकम् ।
चतुष्कं शान्तिपर्यन्तं ततोऽमेयः परश्शिवः ॥ ४४ ॥

प्रमाणमुक्तं निखिलं विभागा-
त्तत्त्वाध्वसंस्थं मुनिराजमुख्य ।
समासतश्चाप्यनुलोममार्गात्
प्रदर्श्यते ते विलयो यथावत् ॥ ४५ ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे

प्रमाणपटलस्समाप्तः ।

---

# अथ प्रळयपटलः ।

अथ सर्वाध्वनोऽधस्तात्स्फुरदग्नेर्मरीचिभिः ।
कालाग्निरुद्रो भगवान् श्रीकण्ठेन महात्मना ॥ १ ॥

संस्थापितोऽधिकारे स्याद्यावत्कालस्य पर्ययः ।
कालो नाम मनुष्याणां द्विविधः प्रळयात्मकः ॥ २ ॥

उपभोगक्षयादेकस्स च देहान्तदर्शनात् ।
लक्ष्यतेऽन्योऽपि संहारो लोकत्रयपरिक्षयात् ॥ ३ ॥

क्रीडतो देवदेवस्य श्रीकण्ठस्यामितद्युतेः ।
जगदात्मवशं कर्तुमथ तस्मात्स लीलया ॥ ४ ॥

तीव्रेण योगवीर्येण शरीरं पद्मजन्मनः ।
समाविश्य जगत्कर्ता तमसा भूरिणा यथा ॥ ५ ॥

ब्रह्मणस्सात्विकं वृत्तमभिभूतं शिवेच्छया ।
क्षोभयित्वा च कालाख्यं विवेश भुवनेश्वरम् ॥ ६ ॥

तेनाग्निना क्षोभितश्च कालरुद्रः प्रतापवान् ।
बृंहितस्सहसा क्रोधात्प्रजज्वाल स्वकां तनुम् ॥ ७ ॥

तस्य ज्वालासहस्रेण सुशुभ्रेणातितेजसा ।
निर्दहत्याशु चाविष्टो लोकानां त्रितयं मुने ॥ ८ ॥

एवं श्रुत्वा वचस्तस्य देवदेवस्य विप्रराट् ।
प्रणिपत्य यथान्यायं पृष्टवान् कारणेश्वरम् ॥ ९ ॥

भोक्ता भोग्यस्य देहाख्यः प्रलयो देहसंक्षयात् ।
स च वृत्यात्मकः पुंसां नित्यं क्षोभवशात्स्थितः ॥ १० ॥

वृत्तस्य नियमस्सिद्धो भोग एव प्रदर्शकः ।
वक्तव्यो ब्रह्मणस्स्वापे यथावत्सुविनिश्चयात् ॥ ११ ॥

ततः प्रोवाच विश्वात्मा मतङ्गाय सुमेधसे ।
स्वस्थस्य पुरुषस्याक्षिनिमेषांशस्त्रुटिस्स्मृतः ॥ १२ ॥

साऽतिसूक्ष्मतया ग्राह्या तदतीतो न लक्ष्यते ।
कालः कालप्रवाहेऽस्मिन्नप्रमेयोऽप्यथोच्यते ॥ १३ ॥

विभागस्थितये विप्र स च त्रुट्यादिभिस्स्थितः ।
कलादिरुच्यते कृत्स्नं संख्याऽनेन तवाधुना ॥ १४ ॥

त्रुटिर्नाम कला सूक्ष्मा लवस्तद्द्विगुणस्स्मृतः ।
लवद्वयं निमेषास्तु काष्ठा पञ्चदशात्मिका ॥ १५ ॥

त्रिंशत्काष्ठात्मिका वाहः वाहास्त्रिंशत्प्रपीडितः ।
मुहूर्तसंज्ञा लोकेऽस्मिन् तत्त्रिंशद्भिश्च सुव्रत ॥ १६ ॥

अहोरात्रं समाख्यातं तन्त्रेऽस्मिन् पारमेश्वरे ।
पक्षोऽहोरात्रवर्गेण ज्ञेयः पञ्चदशात्मना ॥ १७ ॥

पक्षद्वयात्स्मृतो मासो द्वौ मासावृतुरिष्यते ।
ऋतूनां त्रितयं यत्स्यादयनं मुनिसत्तम ॥ १८ ॥

अयनद्वितयेनाऽपि वत्सरः परिभाष्यते ।
सौरो मानुष्यजातीनां तेषां षष्ठ्यधिकैश्शतैः ॥ १९ ॥

---

१. भोक्तुर्भोग्यस्येति पाठभेदः । २. भोगवशादिति पाठभेदः ।

त्रिभिर्दिवौकसामब्दं कथितं तत्र दर्शनात् ।
चत्वार्यब्दसहस्राणि वैबुधानि कृतं युगम् ॥ २० ॥

सन्ध्यागतानि तावन्ति सन्ध्यांशस्तावदेव हि ।
एकैकह्रासतोऽन्यानि त्रेताद्यानि युगानि तु ॥ २१ ॥

सन्ध्यासन्ध्यांशयुक्तानि कल्पनिष्ठान्यतः परम् ।
सर्वमेतत्समाख्यातमब्दानां तु चतुर्युगम् ॥ २२ ॥

सहस्राणि दश द्वे च तस्मान्मन्वन्तरं परम् ।
चतुर्युगैकसप्तत्या विज्ञेयं गणितादिभिः ॥ २३ ॥

स्वव्यापारनियुक्तानामिन्द्राणामायुरुच्यते ।
एकैकस्य भवेदायुर्युगानामेकसप्ततिः ॥ २४ ॥

तैश्चतुर्दशभिश्शक्रैर्दिनं कमलजन्मनः ।
लोकत्रयस्थितिर्यावत्समासेन तवोदिता ॥ २५ ॥

विरिञ्चेस्तावती रात्रिर्यस्यां लोकत्रयं मुने ।
क्षयं याति तमः प्राप्ते तदवस्थं महामुने ॥ २६ ॥

ब्रह्माप्युत्थाय शयनादादिष्टः करणात्मना ।
रुद्रशक्तिबलाद्भूयो निर्मिणोति जगत्सदा ॥ २७ ॥

एतद्ब्राह्ममहोरात्रं महाकल्पश्च कीर्त्यते ।
एवमेव भवेत्संख्या तेषां षष्ठ्यधिकैश्शतैः ॥ २८ ॥

त्रिभिरब्दं समाख्यातमब्दानां तु शतं प्रभुः ।
जीवेद्ब्रह्मा मुनिव्याघ्र नात्र कार्या विचारणा ॥ २९ ॥

---

१. गुणितार्थिभिः । २ महर्मुखे इति पाठभेदः ।

कालाग्निरुद्रो दीप्तात्मा ज्वलच्छक्तिमरीचिभिः ।
ऊर्ध्वगामिस्सुघोराभिर्ददाह भुवनत्रयम् ॥ ३० ॥

ये चात्र भुवनेशाना रुद्राश्शुद्धेन्दुमौळयः ।
कूष्माण्डहाटकाद्यास्तु योगवीर्योपबृंहिताः ॥ ३१ ॥

कारणानुमतास्सन्तस्स्वस्थानानि विहाय तु ।
सूक्ष्मेण वपुषा वह्नेरसम्प्राप्तास्सुगोचरम् ॥ ३२ ॥

लीलयैव तदा सर्वे प्रविष्टास्तनुमैश्वरीम् ।
शेषा निर्दग्धतनवो जङ्गमास्सचराचराः ॥ ३३ ॥

क्रन्दमानास्सुवित्रस्ता नष्टभोगास्सुकेवलाः ।
समुत्सृज्य शरीराणि मूढाः कारणवर्जिताः ॥ ३४ ॥

जनोलोकं हि सम्प्राप्ता नष्टसंज्ञाः परस्परम् ।
अज्ञानतमसाविष्टास्तिष्ठन्त्याभूतसंप्लवम् ॥ ३५ ॥

तेनाटोपेन महता ध्रुवान्तमुपसर्पिणा ।
वह्नेर्ज्वालासमूहेन ये महर्लोकवासिनः ॥ ३६ ॥

प्रपालयन्ति सन्त्रस्ता ध्रुवमूढेन वर्त्मना ।
विश्रामश्च ततस्तेषां जनोलोकेऽभयात्मनाम् ॥ ३७ ॥

निर्दग्धमुद्यतस्यास्य न वृक्षा न सरीसृपाः ।
न पक्षिणो मृगाश्चैव पशवो न च मानुषाः ॥ ३८ ॥

न देवा दानवा नागा न चान्ये तत्र वासिनः ।
नाचलास्सरितो नैव न सरांसि न सागराः ॥ ३९ ॥

तिष्ठन्ति मुनिशार्दूल क्षणार्धमपि भूतले ।
लोकत्रयस्य कृत्स्नस्य दह्यमानस्य सुव्रत ॥ ४० ॥

न शक्नुवन्ति वै सोढुं तेजः परमदुर्जयम् ।
एवं वृत्ते निशाकाले ब्रह्मामरगुरुः प्रभुः ॥ ४१ ॥

प्रबुद्धचति समाविष्टश्श्रीकण्ठेनामितात्मना ।
तदाऽनुध्याय विश्वात्मा प्र[1](ज्ञ)योचितसम्पदम् ॥ ४२ ॥

सिसृक्षुर्जगतो धाता योगेनातिबलीयसा ।
एवमब्दशतं पूर्णं भावाभावपरिभ्रमात् ॥ ४३ ॥

स्वाधिकारं समाप्यैवं महत्तत्त्वे स विश्वराट् ।
बुभोज विपुलान् भोगान् भोगस्थानं यतस्तु तत् ॥ ४४ ॥

लयश्चास्य पदे ज्ञेयो गुणाख्ये गुणवत्तरे ।
न्यायेनानेन संसिद्धा नेतारो जगतः पुरा ॥ ४५ ॥

ये चान्येषां न तेभ्योऽस्ति संख्या मुनिवरोत्तम ।
किन्तु ये बुद्धितत्वात्तु श्रीकण्ठेच्छाप्रचोदिताः ॥ ४६ ॥

तेऽधिकारपदातीताश्शतधा पद्मयोनयः ।
यावदब्दशतं भाव्यं तस्मिन्नेवान्तरे प्रभुः ॥ ४७ ॥

ब्रह्मणोऽण्डं स्ववीर्येण संहृत्य सचराचरम् ।
जले संयोजयेत्तोयं पृथिव्या सहितं ततः ॥ ४८ ॥

वह्नौ लयमवाप्नोति वह्निः पृथ्व्यम्बुना सह ।
वायौ प्रलीयते वायुस्तैस्सार्धं पार्थिवादिभिः ॥ ४९ ॥

---

१. प्रादायोचित इति पाठभेदः ।

व्योम्नि संलीयते व्योम गर्वे गर्वो महत्यपि ।
महान् गुणेषु विप्रेन्द्र गुणास्तत्त्वे परे ययुः ॥ ५० ॥

शतरुद्रादयश्शूराश्शिवयोगबलान्विताः ।
श्रीकण्ठभुवनं प्राप्य क्रीडन्त्यविरतेन्द्रियाः ॥ ५१ ॥

ततश्श्रीकण्ठवीर्येण सर्वकर्तृत्वकारिणा ।
प्रधानमचलं भूयो भूयोऽप्येवं सहस्रधा ॥ ५२ ॥

भूत्वा भूत्वा लयं यान्ति ग्रन्थौ मायाक्रमे क्रमात् ।
लुप्तायासमदा रुद्राः क्षेत्रिणश्च विचेतसः ॥ ५३ ॥

सुषुप्तकिरणास्सन्तः प्रतीक्षन्तो निशाक्षयम् ।
प्राप्ते चाहर्मुखे पत्युरनन्तेशस्य धीमतः ॥ ५४ ॥

विस्फूर्जन्ति स्वकार्येषु भोगसक्ता मदातुराः ।
ये यत्र विसृताभासस्सविकारास्तु पुद्गलाः ॥ ५५ ॥

ते तत्रैव प्रलीयन्ते नान्यत्र मुनिपुङ्गव ।
मायोर्ध्वच्छदने रुद्रा व्याख्याता गगनादयः ॥ ५६ ॥

ग्रन्थीशा दीपवद्भान्ति ध्यानाशक्तास्सदैव हि ।
येऽप्यधश्च्छदनाधस्तात्स्फुरन्माणिक्यमौळयः ॥ ५७ ॥

मायान्धकारगहने खद्योता इव निर्मलाः ।
ये वर्गा भुवनेशानां रुद्राणाममितात्मनाम् ॥ ५८ ॥

शक्तयस्तान्विजानीयात्क्रीडतः परमेष्ठिनः ।
एवं ह्यनादिमध्यान्तं दानादानादिवर्त्मना ॥ ५९ ॥

अक्षीणविभवास्सूक्ष्मास्सर्पितास्तत्त्वसर्पिते ।
प्रळये च यथापूर्वं संहृतास्ते तथैव हि ॥ ६० ॥

भोगिनो भोगसिद्ध्यर्थं शरीराणि विशन्ति हि ।
प्रळयोऽन्योऽपि शुद्धानां भूयो येन गतज्वराः ॥ ६१ ॥

नाप्नुवन्ति जराजन्ममरणार्णवमायतम् ।
शुद्धाध्वपतयो देवा मन्त्राश्चामोघशक्तयः ॥ ६२ ॥

न सीदन्ति न लुप्यन्ति न च पीड्यन्ति केनचित् ।
समाप्य स्वाधिकारांस्ते प्रयान्ति पदमुत्तमम् ॥ ६३ ॥

अन्योऽपि हि लयस्तेषां यदा मन्त्रतनुश्शिवः ।
पदात्पदं निवृत्यादिशक्त्यन्तं यच्चतुष्टयम् ॥ ६४ ॥

वहन् प्रयात्यथाऽऽयाति तथाप्येवाऽनुवर्तिनः ।
तच्चित्तास्त्यक्तकलुषा विचेष्टन्ति पदात्पदम् ॥ ६५ ॥

सकलभुवनमार्गे वर्णितो यो लयस्ते
प्रतिभुवननिवृत्तिं ये यथा वाऽप्नुवन्ति ।
तनुकरणविचेष्टानिर्जितान्यादरेण
गुरुलघुविनियोगात्साम्प्रतं भो निबोध ॥

इति श्रीमतङ्गपारमेश्वरे विद्यापादे

प्रलयपटलस्समाप्तः ।

---

१. रमति प्रत्ययातीतस्तथा तेऽप्यनुवर्तिनः । इति पाठभेदः ।

# अथ धर्माधर्मनिर्णयपटलः ।

अथातस्सम्प्रवक्ष्यामि धर्माधर्मविनिर्णयम् ।
अधर्माद्यद्भवेद्दुःखं धर्माच्चैव सुखं पशोः ॥ १ ॥

तत्सामान्यगिरा प्रोक्तं कलातश्चोपसर्पितम् ।
वासनावशगं प्रोक्तं तद्विपाकोऽनुसर्पते ॥ २ ॥

स भोगो भोगिनां सिद्धस्त्रिविधः कर्मभेदतः ।
दानेन भोगवान् लोके तच्च दानमथोच्यते ॥ ३ ॥

आर्तेभ्यश्चार्तिनाशाय वाङ्मनःकायकर्मभिः ।
सुखिभ्योऽसुखनाशाय पूर्ववत्त्रिविधं मतम् ॥ ४ ॥

भूयः कालविशेषेण पुनः पात्रविशेषतः ।
भिन्नं क्षेत्रविशेषाच्च भूयो वित्तानुसारतः ॥ ५ ॥

भूयस्तद्गुणभेदेन विभिन्नं बहुधा मुने ।
जातिभेदाद्रूपभेदाच्छौर्यविज्ञानभेदतः ॥ ६ ॥

सौभाग्यभेदतश्चापि दौर्भाग्येन च लक्ष्यते ।
एवं मध्योत्तमाद्भोगात्कनिष्ठाच्चैव भेदतः ॥ ७ ॥

न्यूनं न्यूनतमानि स्युश्श्रेष्ठं श्रेष्ठतमानि च ।
पशूनामुपसर्पन्ति विभागस्त्वेष चोच्यते ॥ ८ ॥

महद्भिः पातकैः क्रूराः परपीडाकरा नराः ।
नरकेषु निषीदन्ति तेभ्यः क्षीणेषु कर्मभिः ॥ ९ ॥

---

१. भोक्तुरिति पाठभेदः ।




तिर्यग्जातिषु सर्वासु प्रविशन्ति क्रमान्मुने ।
नास्तिक्यभावनाविष्टा मूर्खत्वेनातिभूरिणा ॥ १० ॥

स्थावराः कर्मशेषेण तद्दुःखवशजीविना ।
क्रूरपापोत्कटादीनां च्छिद्रघ्ना न्यायवर्जिताः ॥ ११ ॥

सरीसृपा भवन्तीह विपाकवशजीविनः ।
वाग्दोषभूरिसंश्लिष्टाः पक्षिणो दुष्टचेतसः ॥ १२ ॥

पराभिभवसामर्थ्यवासिता मृगजातयः ।
भयदानाच्च विप्रेन्द्र विह्वलास्सुखवर्जिताः ॥ १३ ॥

क्रव्यादाः क्रव्यभोक्तारो येऽन्यायेन लुलुप्सवः ।
शौचाचारपरित्यागाच्चौर्याद्गतिभयङ्कराः ॥ १४ ॥

भवन्त्यशुचिभोक्तारश्श्वानोऽन्येऽपि च तत्समाः ।
अन्नपानापहर्तारः क्षुत्पिपासापरिप्लुताः ॥ १५ ॥

गृहदारापहरणैर्वस्त्राणां हरणेन च ।
परपीडाकरा मूढाः कर्मभिश्चातिदारुणैः ॥ १६ ॥

पशवस्ते भवन्त्यत्र परतन्त्रास्सदा मुने ।
एवं नानाप्रकाराणि जातिजात्यन्तराणि तु ॥ १७ ॥

प्राप्य शेषाशयवशान्मानुषादुःखजीविनः ।
जघन्यजातयस्तावन्नित्यं शीतातपादिभिः ॥ १८ ॥

तप्यन्ते निस्वकरुणा वध्यमानाः परैर्नरैः ।
केचिन्मूढा दुराचारा मूढत्वाशयवास्थिताः ॥ १९ ॥

परपीडाशयाविद्धास्तद्विकारप्रदर्शकाः ।
च्छिन्ननासाक्षिकर्णाश्च मेढ्रपादादयस्तथा ॥ २० ॥

निसर्गेणैव केचिच्च मूकान्धबधिरा नराः ।
पङ्गवो वामनाः कुब्जाः कुणपोच्छ्वासिनस्तथा ॥ २१ ॥

व्यङ्गिनो नष्टवपुषो भवन्त्यन्ये निकेतनाः ।
सौम्याशयवशावेगात्कदाचित्कालपर्ययात् ॥ २२ ॥

अदातारो दरिद्राश्च यद्यप्युत्तमजातयः ।
स्वकार्यपोषणायत्ताः न समर्थाः प्रतर्पितुम् ॥ २३ ॥

एकमप्यतिथिं श्रान्तं किं पुनश्चातिविस्तृतान् ।
स्वात्मानं तु पुरस्कृत्य सहस्राणि शतानि च ॥ २४ ॥

तर्पयन्ति महाभोगा ये च्युता दिवि गोचराः ।
हिंसातोल्पायुषस्सन्ति तथाऽसत्यगिरो नराः ॥ २५ ॥

पूतिवक्त्रास्सुवर्णस्य हरणेनावकुण्ठिताः ।
ब्रह्मघ्नाः क्षयिणस्सन्ति दौश्चर्या गुरुतल्पगाः ॥ २६ ॥

सुरापश्श्यावदन्तस्तु केकरः पुष्पतस्करः ।
मूको ज्ञानापहारेण श्वित्रीवापि प्रदीपहा ॥ २७ ॥

कुब्जश्शय्यापहरणे गृहचोरः प्रवासवान् ।
परदारानुगष्षण्डो भ्रूणहा चोदरी भवेत् ॥ २८ ॥

खट्वाङ्गहारः खल्वाटः पङ्गुः पत्रापहारतः ।
पिंच्छापहरणाद्व्याधिर्भवेन्नाम्ना भगन्धरः ॥ २९ ॥

अश्वादियानापहरणाद्भवेद्वामनको नरः ।
बधिरः कूटसाक्षित्वाद्रणी द्रव्यापहारतः ॥ ३० ॥

दरिद्रः[1] पुस्तकहरः कुष्ठः क्रोशाद्भवेदिह ।
एवमादीनि चिह्नानि लोकेऽस्मिन् मुनिसत्तम ॥ ३१ ॥

सुभगोऽभयदानेन दीर्घायुश्चैव जायते ।
पूर्तधर्मेण विभवो लोकेऽस्मिन् पूर्ववत्स्थितः ॥ ३२ ॥

उपवासयमात्सिद्धा जातिर्द्वीपेष्वनिन्दिता ।
इष्टधर्मवशाल्लोकाक्रमाद्यज्ञानरूपतः ॥ ३३ ॥

यां यां यत्रोपचारेण देवतामुपसर्पति ।
तस्य तस्य भवेत्ताद्धि भोगस्थानानुरूपतः ॥ ३४ ॥

मतङ्गः ।

सुखं वाप्यथवा दुःखं आयुर्मरणमेव च ।
कर्माशयवशात्प्राप्तं कस्तं शक्नोति वारितुम् ॥ ३५ ॥

भोक्तुं वाप्यथवा दातुं शक्तस्स्यादस्वतन्त्रतः ।
न कर्तुर्दृश्यते यस्मात्तस्मात्सर्वमनर्थकम् ॥ ३६ ॥

परमेश्वरः ।

येन येनाऽऽशुभावेन वशीकृत्य शिवेच्छया ।
नियुज्यतेऽसौ भोग्येन[2] कर्मस्वथ तदात्मिकाम् ॥ ३७ ॥

---

१. दरिद्रो वस्त्रहा नग्न इति पाठः । २. भोगेन इति पाठभेदः ।

प्राप्नोति वासनां भूयस्तद्विपाकवशात्पुनः ।
युज्यते सुखदुःखाभ्यां कर्मणा वा तदात्मना ॥ ३८ ॥

एवं श्रद्धा स्थितिः प्राप्तिः ऋद्धिश्चैवोपजायते ।
आदरानादराविष्टः प्रेरितो वाथ केनचित् ॥ ३९ ॥

भयाद्रागवशात्कर्ता तादृगेवोपलक्ष्यते ।
अनश्नतः खाद्यावरणैर्भृगुपातात्तथाऽनिले ॥ ४० ॥

अग्निलोकेऽग्निपाताच्च जलावेशाज्जलात्मके ।
प्राप्तिस्सामान्यतो दृष्टा विशेषाच्चाप्यथोच्यते ॥ ४१ ॥

दानात्सत्यवशात्त्यागाद्व्यवसायाच्च भावितात् ।
स्मरणाच्च भवत्प्राप्ता तस्य तस्य तदात्मिका ॥ ४२ ॥

अनुक्रमाद्यथा पूर्वं विभवश्चोपजायते ।
स्थानं स्यात्तीर्थमाहात्म्यात्तच्चैवात्रोदितं पुरा ॥ ४३ ॥

अग्निहोत्रादिभिः पूर्तैस्तथा चान्द्रायणादिभिः ।
लोकत्रयेऽपि मोदन्ते विमानस्था यशस्विनः ॥ ४४ ॥

शाक्रं पदमवाप्नोति यष्ट्वा क्रतुशतं विधेः ।
या गतिश्शिवभक्तानां श्लाघ्येनाऽपि महात्मनाम् ॥ ४५ ॥

न सा यज्ञसहस्रेण प्राप्यते मुनिपुङ्गव ।

किं पुनश्श्रद्धया विद्वांस्तन्निवेशितबुद्धयः ।
रुद्रास्ते नात्र सन्देहो यत्र यत्र निवासिनः ॥ ४६ ॥

ध्यायिनो ध्यानसामर्थ्याद्भक्त्या भक्तिवशान्नराः ।
केचित्कर्मवशात्सिद्धास्तेऽपि रुद्रास्त्रिशूलिनः ॥ ४७ ॥

क्रीडन्त्यमितभोगास्ते नष्टशोका महाधियः ।
कालानलाच्छिवं यावद्वर्त्मन्यस्मिन्सितासिते ॥ ४८ ॥

प्रयान्ति योजितास्तस्मिन् भुवनेशसमा नराः ।
न्ध्यानतो वाथ सङ्कल्पात्पदं यन्मनसीप्सितम् ॥ ४९ ॥

प्राप्नुवन्ति मुनिव्याघ्र तस्मिन्नेव रमन्ति ते ।

मतङ्गः ।

प्राधानिकं मनः प्रोक्तं प्रधानातीतवर्त्मनि ॥ ५० ॥

न तद्व्यापयितुं शक्तो ध्यानं स्यात्तद्विना कुतः ।

परमेश्वरः ।

मणेरग्निस्समुद्भूतस्तत्तेजोऽभ्यधिको यथा ॥ ५१ ॥

व्याप्नोति तदतीतानि मनस्तद्वन्महामुने ।
प्रवृत्तं योगिनो विप्र लक्ष्येन्धनसुदीपितम् ॥ ५२ ॥

प्रकाशयति तत्वानि ध्यातृध्यानेरणात्सदा ।
बिभर्ति धारितं पाति पालितं चलितं क्षणात् ॥ ५३ ॥

चालयेच्चालितं योगान्नयत्यूर्ध्वमधस्स्मृतम् ।
दीपितं वर्णभेदाच्च नानाकर्माणि कारयेत् ॥ ५४ ॥

---

१. ध्वनीति पाठभेदः ।  २. चालितं चलतीति पाठभेदः ।

अथ किं बहुनोक्तेन योगपादे प्रविस्तरात् ।
वक्तव्यं मुनिशार्दूल यद्वक्तव्यं तथाऽऽस्थितम् ॥ ९५ ॥

तदस्मिन्नातिविस्ताराच्छृणुष्वैकमना मुने ।
शासनस्याऽपि ये भक्तास्तेऽपि दुःखविवर्जिताः ॥ ९६ ॥

अप्सरोभिर्वृता नित्यं क्रीडन्त्युत्कृष्टचेतसः ।
लिङ्गं माहेश्वरं प्रीत्या नमस्कारेण पाद्यतः ॥ ९७ ॥

पूजयन्ति नराश्शूरास्तेऽपि सिद्धा गणेश्वराः ।
रमन्ति विविधैर्भोगैः प्राप्य स्थानमुमापतेः ॥ ९८ ॥

शतरुद्रान्तिकं स्थानं सकृल्लिङ्गार्चनाल्लभेत् ।
आलये शिवलिङ्गस्य भक्त्या निर्वर्तिते शुभे ॥ ९९ ॥

श्रीकण्ठपदमारुह्य सुखमत्यद्भुतं लभेत ।
एवं भक्तिविभागेन लिङ्गैर्वा विरताःसदा ॥ ६० ॥

उपासन्ते महादेवं तेऽपि सिद्धा नरोत्तमाः ।
प्रधानविषयातीतास्सर्वे दुःखविवर्जिताः ॥ ६१ ॥

यथेप्सितभुजस्सन्तो नावसीदन्ति कर्मणा ।
सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया ॥ ६२ ॥

प्राप्यते चित्तभेदेन मोक्षो वाथ चतुष्टयात् ।
प्रत्यात्मिकेन भोगस्स्याद्विद्यया परया क्वचित् ॥ ६३ ॥

विवेकः खलु कृत्स्नस्य बन्धस्यास्यामितात्मनः ।
विच्छित्तिकारणं प्रोक्तं षट्पादार्थमयं शुभम् ॥ ६४ ॥

मतङ्गः ।

व्याख्यातं भवता स्पष्टमज्ञानं बन्धकारणम् ।
तद्विच्छित्तिकरं ज्ञानं ते चाणोस्सम्प्रतिष्ठिते ॥ ६५ ॥

प्रसूतिर्नासतो यस्माद्विद्यते चेद्विरुध्यते ।
नेप्यते युगपच्छिष्टैरालोकतमसी क्वचित् ॥ ६६ ॥

परमेश्वरः ।

यथाग्निर्भस्मसात्सर्वं करोतीन्धनसञ्चयम् ।
तत्स्थाप्युपायरहितो न विभाति स्वतेजसा ॥ ६७ ॥

विद्याविद्यात्मकं तद्वद्युगपत्पशुसन्ततौ ।
या परा संस्पृशेत्कोटिं परां काष्ठां विवेकतः ॥ ६८ ॥

इति सैवावबोद्धव्या धर्मान्तरनिदर्शनात् ।
शेषं स्यादुपचारेण भोक्तुरध्यवसायजम् ॥ ६९ ॥

स्थितये निर्मितं धात्रा नासतो व्यज्यते क्वचित् ।
किञ्चिदन्तेऽपि लोकेऽस्मिन् किं पुनश्शिवता परम् ॥ ७० ॥

उक्तं तथाप्युपायोक्त्या न चोत्पत्तिः परात्मनः ।
ज्ञानाभिव्यक्तये व्यक्तं शिवतत्वमणुं प्रति ॥ ७१ ॥

व्यक्तोऽसौ शिववद्भाति शिव एव तनुक्षये ।
अमुक्तानामयं न्यायश्शिवबोधादनन्तरम् ॥ ७२ ॥

परिपूर्णस्स निर्वाणपतिरेव न संशयः ।
योऽभिलाषात्मको भावो ममत्वेनात्मवर्तिना ॥ ७३ ॥

सोऽङ्कुरोणोरविद्याख्यस्संसारोत्पत्तिकारणम् ।
तत्संश्लिष्टा कला सूक्ष्मा वासितानादिकर्मणा ॥ ७४ ॥

यदा विद्याग्निना प्लुष्टा सा विद्या कलया सह ।
मदोदयास्तदा सर्वे ह्याशया चोर्ध्वगोचराः ॥ ७५ ॥

ध्वंसमायान्ति वै क्षिप्रं तत्क्षणात्क्षणकर्मणः ।
पुंसोचितं शिवत्वं स्यात्प्रकटं सर्वतोमुखम् ॥ ७६ ॥

यस्याशेषभवार्णवोदरगता भावो भवेच्छार्दिता
ध्वस्तास्तत्किरणोद्गतासिलतया सोनादरात्साम्प्रतम् ।
क्रीडन् क्रीडनकैरपीन्द्रियवशात्स्वच्छेन युक्तो हृदा
तत्सङ्गाम्बुविधूतपापपटलाः पुण्या नराः क्ष्मातले ॥ ७७ ॥

येनाशेषपदाथदारुनिचितं तत्वात्मशृङ्गोच्छ्रितं
विद्यारत्नसमुज्वलं प्रतिदिनं ध्यातं विभोर्मन्दिरम् ।
तत्तेजोत्थमयूखपाशवशगः प्राप्नोति तस्मिन् क्षणात्
प्राप्यैतां कुटिकां प्रधानतरणात्पश्यत्यधस्तात्सदा ॥ ७८ ॥

पादोऽयमाद्यः प्रविभागयुक्त्या
विद्यात्मकस्ते कथितो यथावत् ।
क्रियात्मकोप्यत्र क्रमादवाप्तः,
प्राक्सूचितो योत्र मुने शृणुष्व ॥

इति श्रीमतङ्गपारमेश्वरे
विद्यापादस्समाप्तः ।

---

॥ श्रीः ॥

# अकारादिक्रमः ।

॥ श्रीः ॥

# श्रीमतङ्गपारमेश्वरविद्यापादीय शुद्धाशुद्धानां सूचीपत्रम् ।

---

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २ | निर्मले | निर्मलम् |
| २ | ६ | ततो | तदा |
| ,, | ,, | लेश | लेशा |
| ,, | १४ | प्रक्षाळयित्वातु | प्रक्षाल्यतमथ |
| ४ | १० | तथा | उप |
| ५ | १६ | स्तूभयं | स्तु हेयं |
| ६ | ७ | समयाचार | समय्याचार |
| ,, | १२ | त्मिका | त्मिकाः |
| ,, | १५ | वीर्यः | वीर्यं |
| ९ | २ | प्रक्ता | पृक्ता |
| १० | २ | व्रतशा | वृतश्शा |
| ११ | १ | देह | देव |
| १२ | १२ | ण्डिश्च | ण्डी च |
| ,, | १६ | द्वलः | ष्कलः |
| ,, | १८ | मकः | यकः |
| १४ | १ | र्वस्मा | यस्मा |
| ,, | ९ | मुक्ति | मूर्ति |
| ,, | १० | पराद्धा | पराग्भा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १६ | शालि | शीलि |
| १५ | ५ | घात | घात |
| ,, | १९ | ह्रीम | भ्रम |
| ,, | २० | लनी | लिनी |
| १६ | ८ | ङ्गल | द्वलः |
| १७ | १४ | यथा | तथा |
| १८ | ७ | ततंशाक्त | ततश्शाक्त |
| ,, | ८ | तत्तदन्येन | ततमन्येन |
| १९ | १० | भावश्च | तावच्च |
| ,, | १६ | चरित | श्चापित |
| २० | ४ | पन्नो | पन्ना |
| ,, | १५ | निसं | ध्वनि |
| २१ | २ | स्यततो | स्थितये |
| ,, | १९ | न्नपि | न्तंच |
| २२ | ६ | गाप्त्री | गोप्त्री |
| ,, | ८ | तात् | तं |
| २३ | १ | तृप्त | तप्त |
| ,, | ,, | ह्वला | ह्वलम् |
| ,, | ६ | न्ति | न्त्य |
| २४ | ७ | कृताः | कृतः |
| ,, | १३ | चप्र | चाप |
| २५ | ६ | व्यापकं | यद्बलं |
| २७ | ३ | प्रभूत | प्रवृत्त |
| ,, | १२ | ज्ञातः | ज्ञातुः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | १८ | स्थानज्ञान | स्थानं ज्ञान |
| ३१ | १ | विंनष्टं वेप्यतेनाथ | नष्टस्यापीष्यते नाशो |
| ,, | २ | ण्डास्ति | ण्डेऽस्ति |
| ,, | ५ | कार्णि | कणि |
| ,, | १६ | त्मनः | त्मकः |
| ३२ | १८ | सिद्धि | सच |
| ३३ | १० | क्षीरं तु वत्स | क्षीरं वत्स |
| ३४ | ९ | श्वेदमल | श्वेत्समल |
| ३५ | ३ | .......... | भेत्तुं न स्व |
| ,, | ,, | वस्तुना | वस्तुनः |
| ,, | १६ | कर्मणा | कर्मणो |
| ३६ | ८ | विधाति | विघाति |
| ,, | ११ | प्यत्रे | प्यते |
| ३७ | १४ | र्येण | र्योणुः |
| ३८ | ४ | पोद्व | पोद्ध |
| ,, | ८ | सद्भावि | सद्भाव |
| ४१ | १७ | शित्ववे | शिवत्वे |
| ४४ | ३ | कारणे | कारणैः |
| ,, | ८ | निर्वर्तते | निर्वर्तिते |
| ४८ | २ | गुणात्त | गुणात्म |
| ,, | १९ | वशगो | वशगः |
| ४९ | १८ | ग्रन्धौ | ग्रन्थौ |
| ५० | ७ | योनि | योहि |
| ५१ | १८ | यान्ति | याति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५१ | १६ | क्षणाः | क्षणः |
| ५२ | १५ | संस्थितां | संस्थिताः |
| ५३ | ३ | ततेरश्म | तदातेरश्म |
| ५४ | १५ | मुतन | मुवन |
| ५९ | १५ | परमेश्वर | पारमेश्वरे |
| ६० | १३ | कृत्स | कृत्स्न |
| ६१ | ४ | क्षेत्रंबु | क्षेत्रांबु |
| ६४ | १ | रुद्रा क्री | रुद्राः क्री |
| ,, | ८ | श्वाती | श्वाति |
| ६७ | ७ | संप्रदर्शिक | संप्रदर्शितः |
| ६८ | ३ | दुख | दुःख |
| ७६ | ५ | मृत्तिण्ड | मृत्पिण्ड |
| ,, | १ | त्रितीयो | तृतीयो |
| ९१ | ६ | ड्निनि | ड्नि |
| ९३ | १९ | गन्धवर्स्य | गन्धर्वस्य |
| ,, | २० | यक्षसोऽपि | यक्षस्यापि |
| ९७ | २ | ज्ञानेनयोजय | ज्ञाने नियोजय |
| १०२ | ११ | माणेऽपि | माणोऽपि |
| १०३ | ६ | कण्ठ | कण्ट |
| ,, | ,, | मिलाषते | मिलाषिते |
| १०८ | ७ | यात्यक्षी | यान्त्यक्षी |
| ,, | १४ | प्रक्तना | प्राक्तना |
| १११ | १० | स्सोऽच्य | स्सोच्य |
| ११२ | ५ | स्पृष्टामिति | स्पृष्टाहमिति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११२ | १५ | तास्सती | तासती |
| ११७ | १७ | मश्वरे | मेश्वरे |
| ११८ | ८ | क्क | क |
| १२० | १४ | स्स्वत्व | स्सत्व |
| १२१ | १० | स्फुठं | स्फुटं |
| १२७ | १८ | तत्प्राप्त्य | तत्प्राप्त्यै |
| १२७ | १९ | निर्मितातित | निर्मितानि |
| १३० | ८ | लोमनि | लोमानि |
| ,, | ,, | नखाश्च | नखानि |
| १३९ | ९ | ल्लायवः | जातयः |
| १४० | १७ | नाम | नाम्ना |
| १४१ | १९ | भेद्र | भद्र |
| १४२ | ४ | स्तद्द | स्तद्दि |
| १४१ | ५ | रन्त | रत्न |
| १४२ | १६ | पुज्यन्ते | पूज्यन्ते |
| १४३ | १ | पुजि | पूजि |
| १४५ | ६ | यायव्यां | वायव्यां |
| १४७ | १० | मह | मद |
| १४९ | २० | —नबादितः | नवोदितः |
| १५० | १० | सहद्व्य | सहस्रद्व्य |
| १५१ | ११ | तस्थितां | तस्स्थिता |
| १५४ | २१ | स्यीते | स्येति |
| ,, | १२ | कस्तु | षस्तु |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९४ | १३ | ग्निंश | त्रिंश |
| ,, | ,, | ष्ठत्मिका | ष्ठात्मि |
| ,, | १८ | ऋदूनां | ऋतूनां |
| १५८ | ७ | मायाक्रमे | मायात्मके |
| १९९ | १० | शक्त्यन्तं | शान्त्यन्तम् |
| ,, | १२ | चेष्टन्ति | चेष्टन्ते |
| १६२ | २ | कर्णाश्च | कर्णास्य |
| ,, | ४ | पङ्कवो | पङ्क्वो |
| १६३ | २ | रणी | ऋणी |
| ,, | १५ | येनयेनाशुभावेन | यो येनाशयभावेन |
| १६४ | ६ | खाद्यावरणैः । | खावरणे |
| ,, | २६ | श्लाध्येन । | शाठ्येन |
| १६६ | १८ | प्रत्यात्मि | प्रात्यात्मि |
| १६७ | ६ | तत्स्थाप्यु | तत्स्थोप्यु |
| १६८ | ६६ | पदाथ | पदार्थ |
| ,, | १४ | तरणात् | तृणजां |

॥ श्रीः ॥

# प्रक्षिप्तश्लोकाः ।

---

अष्टमे पृष्ठे="स्वधर्मैरवगम्यन्ते स्वागमोक्तिनिदर्शनादि"ति पद्यानन्तरम् एतानिपद्यानि घटयितव्यानि ।

"धूमा अग्नेर्यथा पत्युश्शक्तयोर्विद्धि साधनम् ।
धर्मेण साध्यते धर्मी क्वचित्कार्येण कारणम् ॥

कारणेन क्वचित्कार्यं क्वचिदाम्नायदर्शनात् ॥"

१२ तमे पृष्ठे="अतिसूक्ष्मानिकृष्टत्वाद्वैकल्याद्वाथ चक्षुषः" इत्यस्यानन्तरम्,

"तस्य तस्य तदाभावो यच्च द्रष्टुं न शक्यते ।
अभावोऽर्थक्रियाभावात्"

इत्येतत्संघटयितव्यम् ॥

---

# தேவகோட்டை

### சிவாகம சித்தாந்த பரிபாலன சங்கத்திலிருந்து
### அச்சிட்டு வெளிவந்திருக்கும் புத்தகங்களின்

# விளம்பரம்.

---

சிவார்ச்சனசந்திரிகை:— இது ஸ்ரீ அப்பைய தீக்ஷிதரால் ஆக்கப்பெற்றது. ஆத்மார்த்த, பரார்த்த பூஜாவிதிகள் அடங்கியது. விலை ரூ. 1 0 0

தத்துவப்பிரகாசிகை
தத்துவசங்கிரகம்
தத்துவத்திரயநிர்ணயம் } ஆக மூன்றும் விலை ரூ 1 0 0

இவற்றில் தத்துவங்களின் விபரங்களும், அவை தோன்றியொடுங்கும் முறைகளும், உயிர்களின் பேதங்களும், சிவபெருமானுடைய சொரூப, தடத்தபேதங்களும் இனிது விளங்கும்.

மதங்கபாரமேசுவரம்:—இது, மூலாகமம் இருபத்தெட்டனுள் ஒன்று. இதன் வித்தியாபாதமட்டும் அச்சிட்டிருக்கிறது. இதில், சித்தாந்த சாத்திரப்பொருள் அனைத்தும் இனிது விளங்கும். விலை ரூ 1 0 0.

இவையனைத்தும் நாகரலிபியில் அச்சாயிருக்கின்றன. வேண்டுவோர் நம்மிடம் பெறுக்கொள்ளலாம்.

வியாபாரிகளுக்குக் கமிஷன் தரப்படும்.

## அச்சிலிருக்கும் புத்தகங்கள்.

---

சைவபூஷணம் கிரந்தமூலமும், தமிழுரையும், அஷ்டப்பிரகரணங்களுள் ஏனைய ஐந்து பிரகரணங்கள் (நாகரலிபியில்).

முதல் மூன்று பிரகரணங்கள் (தமிழில்).

இங்ஙனம்
காரியதரிசி,
சிவாகம சித்தாந்த பரிபாலன சங்கம்,
தேவகோட்டை.